

# दैवत-संहिता

## तृतीयो भागः


लेखक

पं० श्रीपाद दामोदर सातवळेकर,

अध्यक्ष, स्वाध्याय-मण्डल, औन्ध, [ जि० सातारा ]



संवत् २००५, सन १९४८

# दैवत-संहिता- तृतीय भाग

'दैवत-संहिता' के प्रथम भागमें 'अग्नि-इन्द्र-सोम-मरुत्' इन चार देवताओंके ७५७१ मंत्र छपे, और द्वितीय भागमें ' अश्विनौ आयुः-रुद्र-उषा- अदिति-आदित्याः ' इन छः देवताओंके ६९१५ मंत्र छप चुके हैं। इस तरह इन दो विभागोंमें १४४८६ मंत्र छपे हैं जो ग्राहकोंके पास पहुंच चुके हैं।

अब यह दैवत-संहिताका तीसरा भाग ग्राहकोंके सन्मुख उपस्थित किया जाता है, जिसमें छोटे मोटे सवासौ देवताएँ हैं और इनके प्रायः ३७७१ मंत्र यहां देवतानुसार संगृहित हुए हैं जो प्रत्येक देवताशीर्षकके नीचे पाठक देख सकते हैं। इसका ब्यौरा यह है-

## तृतीय भागमें वैदिक देवता

इस दैवत-संहिताके तृतीय विभागमें निम्न लिखित देवताएँ और उनके मंत्र आचुके हैं—

१० वायुः ११९
वायुस्त्वष्टा १
वाय्वन्तरिक्षे ३
२ वरुणः १५२
इन्द्राणी-वरुणानी-अग्नाय्यः १
वरुणमित्रार्यमणः... ६
३ वास्तोष्पतिः ८७
४ वेनः... ९
५ विश्वकर्मा ३४
६ सदसस्पतिः ५
७ अहिः, अहिर्बुध्न्यः ४
८ बृहस्पतिः ९६
९ ब्रह्मणस्पतिः ६१
१० पुरुषः १७२
११ आत्मा १९४
१२ ब्रह्म ८३
१३ अध्यात्मम् ४२८
१४ कः (प्रजापतिः) ४६
प्रजापतिः, हरिश्चन्द्रः, चर्म, सोमो वा १
प्रजापत्यादयः १
वनस्पतिः, प्रजापतिः ७
१५ जीवः ७
१६ वाक् २५
१७ श्रद्धा ५
१८ ज्ञानम् १२
१९ संज्ञानम् १८

२० मनः १२
२१ मन आवर्तनम् १२
२२ असुनीतिः ६
२३ हस्तः २
२४ मन्युः २०
२५ भाववृत्तम् २३
२६ आशीः १३
२७ होत्राशिषः ६
२८ पथ्या स्वस्तिः ८
२९ अभिशापः ४
३० दम्पती ८
३१ दम्पत्याशिषः ९
३२ वधूवासःसंस्पर्शनिन्दा २
३३ कामः ५३
३४ रतिः ६
३५ रेतः ४
३६ निर्ऋतिः १०
३७ पृथिवी १२
पृथिवीद्यवन्तरिक्षसोमपूष-पथ्यास्वस्तयः १
पृथिवीसवितारौ ४
माता भूमिः ६३
३८ द्यावापृथिवी ६७
द्युभूम्यश्विनः १
३९ ऋभवः ९८
४० क्षेत्रपतिः ४
४१ पणयः ६

४२ मायाभेदः ३
४३ ब्रह्मजाया १८
४४ गौः ३३३
४५ अश्वः ८२
४६ हरिः १४
४७ दधिक्रा २५
४८ सरमा ५
४९ शुनः, शुनासीरौ ४
५० श्वानौ ३
५१ तार्क्ष्यः ३
५२ श्येनः ११
५३ शकुन्तः ६
५४ अक्षाः ६
५५ अक्षकितवनिन्दा ९
५६ कृषिः १
५७ मश्चनः १
५८ अरण्यानी ६
५९ सीता ७
६० रथः ५
६१ रथाङ्गानि ४
६२ दुन्दुभिः २६
६३ द्रुघणः, इन्द्रो वा १२
६४ संग्रामाशिषः २२
६५ अत्रिः ४
६६ विश्वामित्रः ३
६७ वामदेवः २
६८ वसिष्ठपुत्राः, इन्द्रो वा ९

*

६९ वसिष्ठः ५
७० वसिष्ठाशीः १
७१ रोमशा १
७२ अङ्गिरःपित्रथर्वभृगुसोमाः १
७३ उपाध्यायः १
७४ भावयव्यः ६
७५ प्रजापतिः हरिश्चन्द्रः चर्म सोमो वा १ ( प्रकरण १४ देखो )
७६ स्वनयः–अस्य दानस्तुतिः ७
७७ सोमकः साहदेव्यः २
७८ पुरुमीळ्हो वैददश्विः, तरन्तो वा २
७९ तरन्तमहिषी शशीयसी ४
८० रथवीतिदार्भ्यः ३
८१ सुदासः पैजवनः ४
८२ राजा २१
८३ बृबुस्तक्षा २
८४ सार्ञ्जयः प्रस्तोकः ४
८५ आसङ्गः ५
८६ विभिन्दुः २
८७ पाकस्थामा कौरयाणः ४
८८ कुरुङ्गः ३
८९ कशुश्चैद्यः ३
९० तिरिन्दिरः पार्शव्यः ३
९१ त्रसदस्युः पौरुकुत्स्यः २
९२ चित्रः २
९३ वरुः सौषाम्णिः ३
९४ पृथुश्रवाः कानीतः ४
९५ श्रुतर्वा आर्क्षः ३
९६ ऐन्द्रो वसुक्रः ५
९७ देव्यः, इंद्राणीवरुणान्यग्नाय्यः २
९८ कुरुश्रवणत्रासदस्यवः २
९९ उपमश्रवा मैत्रातिथिः ४
१०० असमातिः ५
१०१ सावर्णिः (दानं) ४
१०२ ऋक्षाश्वमेधौ ६
१०३ उर्वशी ९
१०४ पुरूरवा ९
१०५ दक्षिणा दक्षिणादातारो वा ११
१०६ शत्रुसेनामोहनम् २
१०७ शत्रुनाशनम् ७०
१०८ श्रेयः–प्राप्तिः ५
१०९ बल–प्राप्तिः ३
११० वर्चः–प्राप्तिः ३
१११ ऊर्जः–प्राप्तिः ३
११२ अनुमतिः ६
११३ केवलः पतिः ५
११४ मधुविद्या २४
११५ अध्यापकविघ्नशमनम् २
११६ अतिथि–सत्कारः ७३
११७ विद्युत् ४
११८ कामिनीमनोऽभिमुखीकरणम् २
११९ रयिसंवर्धनम् २
१२० शितिपाद् अविः ६
१२१ विश्वजित् ४
१२२ तारके १
१२३ मेखलाबंधनम् ५
१२४ राष्ट्रसभा ३
१२५ विवाह–प्रकरणम् १८१
१२६ परिशिष्टानि ४६१

उपदेवताओंके साथ ये सब देवताएं प्रायः १५० है।

इन १२६ देवताओंके कुल मंत्र ३७७१ यहां संगृहीत हुए हैं।

इन देवताओंके मन्त्रोंमें वायु वरुण आदि देवता अन्तरिक्षस्थ हैं। वास्तोष्पति, विश्वकर्मा, ब्रह्मणस्पति, बृहस्पति, पुरुष, आत्मा, ब्रह्म आदि देवताएँ विश्वके निर्माणकर्ता परमेश्वरका बोध विशेष रीतिसे कराते हैं, गौण भावसे अन्यान्य उपदेश भी बताते हैं, यह तो इनका अर्थ देखनेसे सब कोई जान सकते हैं। इन देवताओंमें 'विश्व–कर्मा' पद विश्वके कर्ताका ज्ञान देता है, 'वास्तोष्पति' का स्पष्ट आशय वस्तुका स्वामी अर्थात् विश्वरूपी वस्तुका अधिपति है। 'बृहस्पति और ब्रह्मणस्पति' ये पद ज्ञानपति परमात्माके बोधक हैं। 'पुरुष–आत्मा–ब्रह्म' ये पद तो स्पष्ट परमात्माके वाचक हैंही। इस तरह ये देवताएँ सृष्टिकर्ता परमात्माका वर्णन कर रहीं है, अतः इनको यहां इकट्ठा करके क्रमपूर्वक रखा है।

इसके पश्चात् 'अध्यात्म' देवता है। वस्तुतः अध्यात्म पदका अर्थ आत्माका सम्बन्ध बताता है, और इन सूक्तोंका देवता अथर्व-सर्वानुक्रमणीमें 'अध्यात्म' ही दिया है, तथापि यहांके अध्यात्म देवताके सबके सब सूक्त आत्मापरक नहीं प्रतीत होते। पर इनके अर्थका विचार करनेके समय इसका विशेष स्पष्टीकरण हम करेंगे। निःसंदेह यह सत्य है कि इन सूक्तोंके बहुत मन्त्र आत्माकी शक्तिकाही वर्णन कर रहे हैं। इसीलिये हमने इनको यहां इकट्ठा किया है।

इसके पश्चात् 'कः, जीवः' ये दो देवताएँ आत्मावाचक स्पष्टही हैं। 'कः' का अर्थ प्रजापति शतपथ ब्राह्मणने दियाही है। इसलिये येभी परमात्मपरकही मन्त्र हैं। इस तरह ये सब सूक्त परमात्माका वर्णन कर रहे हैं।

इसके पश्चात् 'वाक्, श्रद्धा, ज्ञानं, संज्ञानं, मनः, मन आवर्तनं, असु–नीतिः, हस्तः, मन्युः (क्रोध अथवा उत्साह)' ये देवताएँ मनुष्यकी आन्तरिक शक्तियाँही हैं। मानवमें कौनसी शक्तियाँ हैं और उनका विकास किस तरह हो सकता है, यह विचार इन सूक्तोंमें किया है। इसलिये इनका संग्रह एक स्थानपर यहां किया है। 'आशीः ( आशीर्वाद ), स्वस्ति (कल्याण), शाप' इनका सम्बन्ध मानवकी उन्नति अवनतिके साथ है इसलिये इनको साथ साथ रख दिया है।

इसके नंतर 'दम्पती ( पति-पत्नी ), काम, रति, ईशः इन देवताओंका सम्बन्ध गृहस्थीके निज विषयके साथ है, इस-

लिये इनको यहाँ एक स्थानपर रखा है। पाठक इन देवताके नामोंसेही जान सकते हैं कि इनमें कौनसा विषय है और गृहस्थी जीवनके साथ इनका क्या संबंध है।

इसके पश्चात् '**पृथ्वी, मातृभूमि,**' ये देवताएँ हैं। मातृभूमिकी भक्तिका उत्तम वर्णन यहाँ दिया है जो प्रत्येक पाठकके लिये हृदयंगम हो सकता है।

इसके नंतर '**ऋभवः** (शिल्पी), **क्षेत्रपति** (खेतका स्वामी), **पणयः** ( उद्यमी, व्यापारी, अथवा चोर आदि ), **मायाभेदः** ( शिल्पविशेष )' ये देवताएं यहांके पृथ्वीके ऊपरके कार्य कर्ताओंके वाचक हैं। पृथ्वीके ऊपर रहनेवाले जनोंमेंही इनका होना संभव है, इसलिये इनको यहां एक स्थानपर रखा है।

'**ब्रह्मजाया**' ( ब्राह्मण-स्त्री ), **गौः**, **अश्वः**, **हरिः** ( लाल घोडा ), **दधिक्रा** ( श्वेत घोडा ), **सरमा** ( कुत्ती ), **शुनः**, **शुनासीरौ श्वानौ**, **तार्क्ष्यः** ( गरुड ), **श्येनः** ( श्येन पक्षी ), **शकुन्तः**' ये देवताएँ पशुओं और पक्षियोंमेंसे हैं। इनके नामोंसे इनका बोध होता है। इस कारण इन मंत्रोंको यहाँ एक स्थानपर रख दिया है। '**अक्षाः** ( जुवेके पांसे ), **अक्षकितवनिन्दा** ( जुआ और जुआरेकी निन्दा)' ये मंत्र इस दुष्ट व्यसनसे दूर रहनेका उपदेश दे रहे है।

'**कृषिः**, ( खेती ), **अरण्यानी** ( वन ), सीता (हलकी रेषा)' इनका संबंध कृषिके साथ और वृक्ष वनस्पति औषधियोंके साथ है इसलिये इनको एक स्थानपर रखा है।

इसके नंतर '**रथ, रथाङ्गानि, दुन्दुभिः, संग्रामाशिषः।** आदिका संबंध युद्धके साथ है। मानवी जीवनमें कभी कभी युद्ध अनिवार्य होता है, इसलिये ये मंत्र एक साथ यहां रखे हैं।

इसके पश्चात् '**अत्रिः, विश्वामित्रः, वामदेवः**' आदि १५ ऋषियोंके वर्णनके मंत्र हैं। और इनके पश्चात् '**स्वनयः, सोमकः**' आदि ३० राजाओंके वर्णनपरक मन्त्र हैं।

इसके नंतर '**शत्रुसेनासंमोहनम्**' यह युद्धविषयक सूक्त है। शत्रुसेनाको मोहित करना, उसको कुछ भी न सूझे ऐसा करना और इसके पश्चात् '**शत्रुसेनाका नाश**' करना है। इसके करनेपरही '**श्रेय, बल और वर्चस् और ऊर्जसूकी प्राप्ति**' हो सकती है, अतः ये सूक्त यहां एकत्र दिये हैं।

इसके पश्चात् '**अनुमति**' सूक्त है, अनुकूल मतिका संपादन संगठनके लिये अत्यंत आवश्यक होता है। '**केवलः पतिः**' यह सूक्त एक पतिकी एकही स्त्री हो, अनेक स्त्रियां न हों, यह भाव दर्शानेवाला है। '**मधुविद्या**' मीठा आचरण करनेके लिये प्रवृत्त करनेवाली है। इसके अनंतर '**अतिथि-सत्कार**' का प्रकरण है जो गृहस्थोंका धर्म बता रहा है। '**रयि-संवर्धनं**' धनके संवर्धनका मार्ग बता रहा है। '**विश्वजित्**' सब विश्व जीतनेका यज्ञ है। '**मेखलाबंधनम्**' सिद्ध और कटिबद्ध होनेकी सूचना दे रहा है। '**राष्ट्र-सभा**' राष्ट्रके शासन करनेवाली सभा है। सभाके द्वारा राज्यका शासन चलाया जावे, किसी एकको इच्छासेही न चले, इस विषयका यह सूक्त अत्यंत विचार करनेयोग्य है।

इसके पश्चात् अनेक परिशिष्ट-सूक्त हैं जो विविध विषयोंके उपयुक्त निर्देश देते हैं।

पाठक इस संगतिकरणका विचार करेंगे तो उनके मनमें यह भाव स्पष्ट होगा कि मन्त्र-संग्रहका जो क्रम यहां रखा है वह परस्पर सुसंबंधित है। प्रायः परस्पर संबंधित विषयही यहां इकट्ठे किये गये हैं। तथापि जिस समय इन मंत्रोंके अर्थ किये जायँगे, उस समय अर्थकी अनुकूलतासे मंत्रोंको इधर उधर करना पडेगा। इस समय देवताबोधसे जो परस्पर संबंध दीखता है, वही सामने रखकर हमने ये मंत्र इकट्ठे किये और ये प्रकरण बनाये हैं। जब अर्थ किया जायगा उस समय अर्थानुसार इस क्रममें न्यूनाधिक परिवर्तन अवश्यमेव करना होगा और उसी समय जो प्रकरण बनेंगे, वे ठीक होंगे।

यहां केवल मंत्रही रखे हैं, उनके पुनरुक्त मंत्र, पाठभेद, उपमा, विशेषण आदिकी तालिकाएं यहां नहीं हैं जैसी कि, दैवतसंहिताके अन्य प्रथमके दो विभागोंमें दिये हैं। इसका कारण यह है कि ये छोटे छोटे मंत्र-संग्रह हैं। जो पाठक इनको पढेंगे वे इनको उसी समय जान सकते हैं। तथा अर्थ बननेके बाद इसमें परिवर्तन करना पडेगा। इसलिये ये तालिकाएं यहां नहीं दी है।

मंत्रोंका अर्थ होनेके पूर्व मंत्रसूचीकी भी आवश्यकता नहीं है, देवतासूचीसेही कार्य चल सकता है, इसलिये मंत्रसूची भी नहीं दी है, जो अर्थ करनेके पश्चात् दी जायगी।

हमें पूर्ण आशा है कि पाठक इस तृतीय विभागके देवताओंके मंत्र-संग्रहके अध्ययनसे वेदविज्ञानकी जानकारी प्राप्त करेंगे और वैदिक धर्मको जानकर कृतकृत्य होंगे।

औन्ध, ( जि. सातारा )
१५ चैत्र संवत् २००५

निवेदन-कर्ता,
**श्रीपाद दामोदर सातवळेकर,**
अध्यक्ष, स्वाध्याय-मंडल.

दैवत-संहिता-तृतीय भाग

# देवता-सूची।



# दैवत-संहिता ।

[ ऋग्यजुःसामाथर्वणां संहितानां सर्वान् मन्त्रान् देवतानुसारेण संगृह्य निर्मिता । ]

## ११ वायुः ।

॥ १ ॥ ( ऋ० १।२।१-३ )

( १-३ ) मधुच्छन्दा वैश्वामित्रः । गायत्री ।

वायवा याहि दर्शते॒मे सोमा॒ अरं॑कृताः । तेषां॑ पाहि श्रु॒धी हव॑म् १

वाय॑ उ॒क्थेभि॑र्जरन्ते॒ त्वामच्छा॑ जरि॒तारः॑ । सु॒तसो॑मा अह॒र्विदः॑ २

वायो॒ तव॑ प्रपृ॒ञ्चती॒ धेना॑ जिगाति दा॒शुषे॑ । उ॒रू॒ची सोम॑पीतये ३ ३

॥ २ ॥ ( ऋ० १।२३।१ )

( ४ ) मेधातिथिः काण्वः । गायत्री ।

ती॒व्राः सोमा॑स॒ आ ग॑ह्या॒शीर्व॑न्तः सु॒ता इ॒मे । वायो॒ तान् प्रस्थि॑तान् पिब १

॥ ३ ॥ ( ऋ० १।१३४।१-६ )

( ५-१४ ) परुच्छेपो दैवोदासिः । अत्यष्टिः, ६ अष्टिः ।

आ त्वा॒ जुवो॑ रारहा॒णा अ॒भि प्रयो॒ वायो॒ वह॑न्त्वि॒ह पू॒र्वपी॑तये॒ सोम॑स्य पू॒र्वपी॑तये ।

ऊ॒र्ध्वा ते॒ अनु॑ सू॒नृता॒ मन॑स्तिष्ठतु जान॒ती ।

नि॒युत्व॑ता॒ रथे॒ना या॑हि दा॒वने॒ वायो॑ म॒खस्य॑ दा॒वने॑ १ ५

मन्द॑न्तु त्वा म॒न्दिनो॑ वाय॒विन्द॑वो॒ऽस्मत् क्रा॒णास॑ः सु॒कृ॑ता अ॒भिद्य॑वो॒ गोभि॑ः क्रा॒णा अ॒भिद्य॑वः ।

यद्ध॑ क्रा॒णा इ॒रध्यै॒ दक्षं॒ सच॑न्त ऊ॒तयः॑ ।

स॒ध्री॒ची॒ना नि॒युतो॑ दा॒वने॒ धिय॒ उप॑ ब्रुवत ईं॒ धियः॑ २

वा॒युर्यु॑ङ्क्ते॒ रोहि॑ता वा॒युर॑रु॒णा वा॒यू रथे॑ अजि॒रा धु॒रि वोळ्ह॑वे॒ वहि॑ष्ठा धु॒रि वोळ्ह॑वे ।

प्र बो॑धया॒ पुर॑न्धिं जा॒र आ स॑स॒तीमि॑व ।

प्र च॑क्षय॒ रोद॑सी वासयो॒षसः॒ श्रव॑से वासयो॒षसः॑ ३ ७

तुभ्यमुषासः शुचयः परावति भद्रा वस्त्रा तन्वते दंसु रश्मिषु चित्रा नव्येषु रश्मिषु ।
तुभ्यं धेनुः सबर्दुघा विश्वा वसूनि दोहते ।
अजनयो मरुतो वक्षणाभ्यो दिव आ वक्षणाभ्यः ४
तुभ्यं शुक्रासः शुचयस्तुरण्यवो मदेषूग्रा इषणन्त भुर्वण्यपामिषन्त भुर्वणि ।
त्वां त्सारी दसमानो भगमीट्टे तक्ववीये ।
त्वं विश्वस्माद्भुवनात् पासि धर्मणा ऽसुर्यात् पासि धर्मणा ५
त्वं नो वायवेषामपूर्व्यः सोमानां प्रथमः पीतिमर्हसि सुतानां पीतिमर्हसि ।
उतो विहुत्मतीनां विशां ववर्जुषीणाम् ।
विश्वा इत् ते धेनवो दुह्र आशिरं घृतं दुह्रत आशिरम् ६ १०

॥ ४ ॥ ( ऋ० १।१३५।१-३,९ ) अत्यष्टिः ।

स्तीर्णं बर्हिरुप नो याहि वीतये सहस्रेण नियुता नियुत्वते शतिनीभिर्नियुत्वते ।
तुभ्यं हि पूर्वपीतये देवा देवाय येमिरे ।
प्र ते सुतासो मधुमन्तो अस्थिरन् मदाय क्रत्वे अस्थिरन् १
तुभ्यायं सोमः परिपूतो अद्रिभिः स्पार्हा वसानः परि कोशमर्षति शुक्रा वसानो अर्षति ।
तवायं भाग आयुषु सोमो देवेषु हूयते । वह वायो नियुतो याह्यस्मयुर्जुषाणो याह्यस्मयुः २
आ नो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिरुप याहि वीतये वायो हव्यानि वीतये ।
तवायं भाग ऋत्वियः सरश्मिः सूर्ये सचा । अध्वर्युभिर्भरमाणा अयंसत वायो शुक्रा अयंसत ३
धन्वश्चिद्ये अनाशवो जीराश्चिदगिरौकसः । सूर्यस्येव रश्मयो दुर्नियन्तवो हस्तयोर्दुर्नियन्तवः ९ १४

॥ ५ ॥ ( ऋ० २।४१।१-२ ) ×

( १५-१६ ) गृत्समदः ( आंगिरसः शौनहोत्रः पश्चाद् ) भार्गवः शौनकः । गायत्री ।

वायो ये ते सहस्रिणो रथासस्तेभिरा गहि । नियुत्वान्त्सोमपीतये १
नियुत्वान् वायवा गह्ययं शुक्रो अयामि ते । गन्तासि सुन्वतो गृहम् २

॥ ६ ॥ ( ऋ० ४।४६।१ )

( १७-२३ ) वामदेवो गौतमः । गायत्री ।

अग्रं पिबा मधूनां सुतं वायो दिविष्टिषु । त्वं हि पूर्वपा असि १

॥ ७ ॥ ( ऋ० ४।४७।१ ) अनुष्टुप् ।

वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु । आ याहि सोमपीतये स्पार्हो देव नियुत्वता १ * १८

---

× ऋ० २, ४१, १-२; = वा० य० २७।३२, २९; सा० ६००। * ऋ० ४, ४७, १ = वा० य० २७, ३०; सा० १६२८।

॥ ८ ॥ ( ऋ० ४।४८।१-५ ) अनुष्टुप्।

विहि होत्रा अवीता विपो न रायो अर्यः । वायवा चन्द्रेण रथेन याहि सुतस्य पीतये १
निर्युवाणो अशस्ती नियुत्वाँ इन्द्रसारथिः । वायवा चन्द्रेण रथेन याहि सुतस्य पीतये २ २०
अनु कृष्णे वसुधिती येमाते विश्वपेशसा । वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ३
वहन्तु त्वा मनोयुजो युक्तासो नवतिर्नव । वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ४
वायो शतं हरीणां युवस्व पोष्याणाम् । उत वा ते सहस्रिणो रथ आ यातु पाजसा ५

॥ ९ ॥ ( ऋ० ५।५१।५ )
( २४ ) स्वस्त्यात्रेयः । उष्णिक्।

वायवा याहि वीतये जुषाणो हव्यदातये । पिबा सुतस्यान्धसो अभि प्रयः ६

॥ १० ॥ ( ऋ० ७।९०।१-४ ) +
( २५-३३ ) मैत्रावरुणिर्वसिष्ठः । त्रिष्टुप्।

प्र वीरया शुचयो दद्रिरे वा मध्वर्युभिर्मधुमन्तः सुतासः ।
वह वायो नियुतो याह्यच्छा पिबा सुतस्यान्धसो मदाय १ २५

ईशानाय प्रहुतिं यस्त आनट् शुचिं सोमं शुचिपास्तुभ्यं वायो ।
कृणोषि तं मर्त्येषु प्रशस्तं जातोजातो जायते वाज्यस्य २

राये नु यं जज्ञतू रोदसीमे राये देवी धिषणा धाति देवम् ।
अध वायुं नियुतः सश्चत स्वा उत श्वेतं वसुधितिं निरेके ३

उच्छन्नुषसः सुदिना अरिप्रा उरु ज्योतिर्विविदुर्दीध्यानाः ।
गव्यं चिदूर्वमुशिजो वि वव्रु स्तेषामनु प्रदिवः सस्रुरापः ४

॥ ११ ॥ ( ऋ० ७।९१।१,३ ) ※

कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन् ।
ते वायवे मनवे बाधितायाऽवासयन्नुषसं सूर्येण १

पीवोअन्नाँ रयिवृधः सुमेधाः श्वेतः सिषक्ति नियुतामभिश्रीः ।
ते वायवे समनसो वि तस्थु र्विश्वेन्नरः स्वपत्यानि चक्रुः २ ३०

॥ १२ ॥ ( ऋ० ७।९२।१,३,५ ) ×

आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार ।
उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम् १ ३१

---

+ ऋ० ७, ९०, १, ३ = वा० य० ३३, ७०; २७, २४। ※ ऋ० ७, ९१, ३ = वा० य० २७, २३।
× ऋ० ७, ९२, १, ३, ५ = वा० य० ७, ७; २७, २७-२८।

प्र याभिर्यासि दाश्वांसमच्छा नियुद्भिर्वायविष्टये दुरोणे ।
नि नो रयिं सुभोजसं युवस्व नि वीरं गव्यमश्व्यं च राधः ३

आ नो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिरुप याहि यज्ञम् ।
वायो अस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः ५

॥ १३ ॥ ( ऋ० ८।२६।२०-२५ )

( ३४-३९ ) विश्वमना वैयश्वः, व्यश्वो वाऽऽङ्गिरसः । उष्णिक्, २० अनुष्टुप् । २१, २५ गायत्री ।

युक्ष्वा हि त्वं रथासहा युवस्व पोष्या वसो । आन्नो वायो मधु पिबा॒स्माकं सवना गहि २०
तव वायवृतस्पते त्वष्टुर्जामातरद्भुत । अवांस्या वृणीमहे +२१ ३५
त्वष्टुर्जामातरं वय॒मीशानं राय ईमहे । सुतावन्तो वायुं द्युम्ना जनासः २२
वायो याहि शिवा दिवो वहस्वा सु स्वश्व्यम् । वहस्व महः पृथुपक्षसा रथे २३
त्वां हि सुप्सरस्तमं नृषदनेषु हूमहे । ग्रावाणं नाश्वपृष्ठं मंहना २४
स त्वं नो देव मनसा वायो मन्दानो अग्रियः । कृधि वाजाँ अपो धियः २५

॥ १४ ॥ ( ऋ० ८।४६।२५-२८, ३२ )

( ४०-४४ ) वशोऽश्व्यः । २५-२८ प्रगाथः = ( बृहती + सतो बृहती ), ३२ पंक्तिः ।

आ नो वायो महे तने याहि मखाय पाजसे ।
वयं हि ते चकृमा भूरि दावने सद्यश्चिन्महि दावने २५ ४०

यो अश्वेभिर्वहते वस्त उस्रा॒स्त्रिः सप्त सप्ततीनाम् ।
एभिः सोमेभिः सोमसुद्भिः सोमपा दानाय शुक्रपूतपाः २६

यो म इमं चिदु त्मना॒मन्दच्चित्रं दावने ।
अरट्वे अक्षे नहुषे सुकृत्वनि सुकृत्तराय सुक्रतुः २७

उचथ्ये३ वपुषि यः स्वरा॒लुत वायो घृतस्नाः ।
अश्वेषितं रजेषितं शुनेषितं प्राज्म तदिदं नु तत् २८

शतं दासे बल्बूथे विप्रस्तरुक्ष आ ददे ।
ते ते वायविमे जना मदन्तीन्द्रगोपा मदन्ति देवगोपाः ३२

॥ १५ ॥ ( ऋ० ८।१०१।९-१० )

( ४५-४६ ) जमदग्निर्भार्गवः । प्रगाथः - ( विषमा बृहती+समा सतो बृहती )।

आ नो यज्ञं दिविस्पृशं वायो याहि सुमन्मभिः ।
अन्तः पवित्र उपरि श्रीणानो३ ऽयं शुक्रो अयामि ते *९ ४५

---

+ ऋ० ८, २६, २१ = वा० य० २७, ३४ । * ऋ० ८, १०१, ९ = वा० य० ३३, ८५ ।

वेत्यध्वर्युः पथिभी रजिष्ठैः प्राति हव्यानि वीतये।
अधा नियुत्व उभयस्य नः पिब शुचिं सोमं गवाशिरम् १०

॥ १६ ॥ ( ऋ० १०।१६८।१-४ )
( ४७-५० ) अनिलो वातायनः। त्रिष्टुप्।

वातस्य नु महिमानं रथस्य रुजन्नेति स्तनयन्नस्य घोषः।
दिविस्पृग्यात्यरुणानि कृण्वन्नुतो एति पृथिव्या रेणुमस्यन् १
सं प्रेरते अनु वातस्य विष्ठा ऐनं गच्छन्ति समनं न योषाः।
ताभिः सयुक् सरथं देव ईयते ऽस्य विश्वस्य भुवनस्य राजा २
अन्तरिक्षे पथिभिरीयमानो न नि विशते कतमच्चनाहः।
अपां सखा प्रथमजा ऋतावा क्व स्विज्जातः कुत आ बभूव ३
आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः।
घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम ४ ५०

॥ १७ ॥ ( ऋ० १०।१८६।१-३ ) ×
( ५१-५३ ) उलो वातायनः। गायत्री।

वात आ वातु भेषजं शंभु मयोभु नो हृदे । प्र ण आयूंषि तारिषत् १
उत वात पिताऽसि न उत भ्रातोत नः सखा । स नो जीवातवे कृधि २
यददो वात ते गृहे३ ऽमृतस्य निधिर्हितः । ततो नो देहि जीवसे ३

॥ १८ ॥ [ ५४-६६ ] ( वा० य० ५।५ [ पूर्वार्धः ] )

आपतये त्वा परिपतये गृह्णामि तनूनप्त्रे शाक्वराय शक्वन ओजिष्ठाय ५

॥ १९ ॥ ( वा० य० ६।१६ )

वायो वे स्तोकानाम् १६ ५५

॥ २० ॥ ( वा० य० ११।३९ )

सं ते वायुर्मातरिश्वा दधातूत्तानाया हृदयं यद्विकस्तम्।
यो देवानां चरसि प्राणथेन कस्मै देव वषडस्तु तुभ्यम् ३९

॥ २१ ॥ ( वा० य० १४।८, १२, १४ )

प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि ८ ५७

---

× ऋ० १०, १८६, १ [ उत्तरार्धः ]- ३ = ऋ० १, २५, १२; ४, २९, ६; वा० य० २३, ३१; अथर्व० २, ४, ६; ४, १०,६; १२, २, १३; १४, २, ६७; १९, ३४, ४; २०, १३७, ३; सा० १८४०-४२।

विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीमन्तरिक्षं यच्छान्तरिक्षं
दृꣳहान्तरिक्षं मा हिꣳसीः । विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय।
वायुष्ट्वाभि पातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद १२
विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीम् ।
विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ ।
वायुष्टेऽधिपतिस्तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद १४

॥ २२ ॥ ( वा० य० १५।६४ )

परमेष्ठी त्वा सादयतु दिवस्पृष्ठे व्यचस्वतीं प्रथस्वतीं दिवं यच्छ दिवं दृꣳह दिवं मा हिꣳसीः ।
विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ।
सूर्यस्त्वाऽभि पातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतम् ६४ ६०

॥ २३ ॥ ( वा० य० १८।४५ )

समुद्रोऽसि नभस्वानार्द्रदानुः शम्भूर्मयोभूरभि मा वाहि स्वाहा मारुतोऽसि मरुतां गणः
शम्भूर्मयोभूरभि मा वाहि स्वाहाऽवस्यूरसि दुवस्वाञ्छम्भूर्मयोभूरभि मा वाहि स्वाहा ४५

॥ २४ ॥ ( वा० य० १९।४२ सोमसहचारी वायुः ।)

पवमानः सो अद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु मा ४२

॥ २५ ॥ ( वा० य० २०।१५ )

यदि दिवा यदि नक्तमेनाꣳसि चकृमा वयम् । वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः १५

॥ २६ ॥ ( वा० य० २७।३१, ३३ )

वायुरग्रेगा यज्ञप्रीः साकं गन्मनसा यज्ञम् । शिवो नियुद्भिः शिवाभिः ३१
एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विꣳशती च ।
तिसृभिश्च वहसे त्रिꣳशता च नियुद्भिर्वायविह ता वि मुञ्च +३३ ६५

॥ २७ ॥ ( वा० य० ३३।५५ )

प्र वायुमच्छा बृहती मनीषा बृहद्रयिं विश्ववारꣳ रथप्राम् ।
द्युतद्यामा नियुतः पत्यमानः कविः कविमियक्षसि प्रयज्यो ×५५

॥ २८ ॥ ( अथर्व० २।१५।१-६ )

( ६७-८९ ) ब्रह्मा । प्राणः, अपानः, आयुः । त्रिपाद्गायत्री ।

यथा द्यौश्च पृथिवी च न बिभीतो न रिष्यतः । एवा मे प्राण मा बिभेः १ ६७

---

+...मिश्चा सुहुते...विंशत्या...।... वियुभिर्वाय इह...॥ अथर्व० ७।४।१। × ऋ० ६, ४९, ४ ।

यथाऽहंश्च रात्रीं च न बिभीतो न रिष्यतः । एवा मे प्राण मा बिभेः २
यथा सूर्यश्च चन्द्रश्च न बिभीतो न रिष्यतः । एवा मे प्राण मा बिभेः ३
यथा ब्रह्म च क्षत्रं च न बिभीतो न रिष्यतः । एवा मे प्राण मा बिभेः ४ ७०
यथा सत्यं चानृतं च न बिभीतो न रिष्यतः । एवा मे प्राण मा बिभेः ५
यथा भूतं च भव्यं च न बिभीतो न रिष्यतः । एवा मे प्राण मा बिभेः ६

॥ २९ ॥ ( अथर्व० २।१६।१-५ )

प्राणः। १, ३ एकपादासुरी त्रिष्टुप्, २ एकपादासुरी उष्णिक्, ४-५ द्विपदासुरी गायत्री।

प्राणापानौ मृत्योर्मा पातं स्वाहा १। द्यावापृथिवी उपश्रुत्या मा पातं स्वाहा २
सूर्य चक्षुषा मा पाहि स्वाहा ३। अग्ने वैश्वानर विश्वैर्मा देवैः पाहि स्वाहा ४
विश्वंभर विश्वेन मा भरसा पाहि स्वाहा ५ ७७

॥ ३० ॥ ( अथर्व० २।१७।१-७ )

प्राणः। १-६ एकपादासुरी त्रिष्टुप्, ७ आसुरी उष्णिक्।

ओजोऽस्योजो मे दाः स्वाहा १। सहोऽसि सहो मे दाः स्वाहा २
बलमसि बलं मे दाः स्वाहा ३। आयुरस्यायुर्मे दाः स्वाहा ४
श्रोत्रमसि श्रोत्रं मे दाः स्वाहा ५। चक्षुरसि चक्षुर्मे दाः स्वाहा ६
परिपाणमसि परिपाणं मे दाः स्वाहा ७

॥ ३१ ॥ ( अथर्व० १३।४।३२ ) प्राजापत्यानुष्टुप्।

स वै वायोरजायत तस्माद्वायुरजायत ३२ ८५

॥ ३२ ॥ ( अथर्व० २।२०।१-५ )

( ८६-९१ ) अथर्वा। १-४ निचृद्विषमा गायत्री, ५ भुरिग्विषमा।

वायो यत् ते तपस्तेन तं प्रति तप यो३ऽस्मान् द्वेष्टि यं वयं द्विष्मः १
वायो यत् ते हरस्तेन तं प्रति हर यो३ऽस्मान् द्वेष्टि यं वयं द्विष्मः २
वायो यत् तेऽर्चिस्तेन तं प्रत्यर्च यो३ऽस्मान् द्वेष्टि यं वयं द्विष्मः ३
वायो यत् ते शोचिस्तेन तं प्रति शोच यो३ऽस्मान् द्वेष्टि यं वयं द्विष्मः ४
वायो यत् ते तेजस्तेन तमतेजसं कृणु यो३ऽस्मान् द्वेष्टि यं वयं द्विष्मः ५ ९०

॥ ३३ ॥ ( अथर्व० ५।२४।८ ) चतुष्पदाति शक्वरी।

वायुरन्तरिक्षस्याधिपतिः स मावतु।
अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां प्रतिष्ठायामस्यां
चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां देवहूत्यां स्वाहा ८ ९१

॥ ३४ ॥ ( अथर्व० ६।८९।२ )

अथर्वा । ( वातः ) । अनुष्टुप् ।

शोचयामसि ते हार्दिं शोचयामसि ते मनः । वातं धूम इव सध्र्य१ङ् मामेवान्वेतु ते मनः २ ९१

॥ ३५ ॥ ( अथर्व० ४।४०।६ )

( ९२ ) शुक्रः । त्रिष्टुप् ।

येऽ३न्तरिक्षाज्जुह्वति जातवेदो व्यध्वाया दिशोऽभिदासन्त्यस्मान् ।
वायुमृत्वा ते पराञ्चो व्यथन्तां प्रत्यगेनान् प्रतिसरेण हन्मि ६

॥ ३६ ॥ ( अथर्व० ११।४।१-२६ )

( ९४-११९ ) भार्गवो वैदर्भिः । ( प्राणः ) । अनुष्टुप्; १ शङ्कुमती; ८ पथ्यापङ्क्तिः; १४ निचृत्; १५ भुरिक्; २० अनुष्टुब्गर्भा त्रिष्टुप्; २१ मध्ये ज्योतिर्जगती; २२ त्रिष्टुप्; २६ बृहतीगर्भा ।

प्राणाय नमो यस्य सर्वमिदं वशे । यो भूतः सर्वस्येश्वरो यस्मिन्त्सर्वं प्रतिष्ठितम् १
नमस्ते प्राण क्रन्दाय नमस्ते स्तनयित्नवे । नमस्ते प्राण विद्युते नमस्ते प्राण वर्षते २ ९५
यत् प्राण स्तनयित्नुनाभिक्रन्दत्योषधीः । प्र वीयन्ते गर्भान् दधतेऽथो बह्वीर्वि जायन्ते ३
यत् प्राण ऋतावागतेऽभिक्रन्दत्योषधीः । सर्वं तदा प्र मोदते यत् किं च भूम्यामधि ४
यदा प्राणो अभ्यवर्षीद्वर्षेण पृथिवीं महीम् । पशवस्तत् प्र मोदन्ते महो वै नो भविष्यति ५
अभिवृष्टा ओषधयः प्राणेन समवादिरन् । आयुर्वै नः प्रातीतरः सर्वा नः सुरभीरकः ६
नमस्ते अस्त्वायते नमो अस्तु परायते । नमस्ते प्राण तिष्ठत आसीनायोत ते नमः ७ १००
नमस्ते प्राण प्राणते नमो अस्त्वपानते ।
पराचीनाय ते नमः प्रतीचीनाय ते नमः सर्वस्मै त इदं नमः ८
या ते प्राण प्रिया तनूर्यो ते प्राण प्रेयसी । अथो यद्भेषजं तव तस्य नो धेहि जीवसे ९
प्राणः प्रजा अनु वस्ते पिता पुत्रमिव प्रियम् । प्राणो ह सर्वस्येश्वरो यच्च प्राणति यच्च न १०
प्राणो मृत्युः प्राणस्तक्मा प्राणं देवा उपासते । प्राणो ह सत्यवादिनमुत्तमे लोक आ दधत् ११
प्राणो विराट् प्राणो देष्ट्री प्राणं सर्व उपासते । प्राणो ह सूर्यश्चन्द्रमाः प्राणमाहुः प्रजापतिम् १२ १०५
प्राणापानौ व्रीहियवावनड्वान् प्राण उच्यते । यवे ह प्राण आहितोऽपानो व्रीहिरुच्यते १३
अपानति प्राणति पुरुषो गर्भे अन्तरा । यदा त्वं प्राण जिन्वस्यथ स जायते पुनः १४
प्राणमाहुर्मातरिश्वानं वातो ह प्राण उच्यते । प्राणे ह भूतं भव्यं च प्राणे सर्वं प्रतिष्ठितम् १५
आथर्वणीराङ्गिरसीर्दैवीर्मनुष्यजा उत । ओषधयः प्र जायन्ते यदा त्वं प्राण जिन्वसि १६
यदा प्राणो अभ्यवर्षीद्वर्षेण पृथिवीं महीम् । ओषधयः प्र जायन्तेऽथो याः काश्च वीरुधः १७ ११०

यस्तें प्राणेदं वेदु यस्मिंश्चासि प्रतिष्ठितः। सर्वे तस्मैं बुलिं हरानुमुष्मिंल्लोक उत्तमे १८

यथा प्राण बलिहृतस्तुभ्यं सर्वाः प्रजा इमाः। एवा तस्मैं बलिं हरान् यस्त्वा शृणवंत् सुश्रवः १९

अन्तर्गर्भश्चरति देवतास्वाभूतो भूतः स उं जायते पुनः।
स भूतो भव्यं भविष्यत् पिता पुत्रं प्र विवेशा शचीभिः २०

एकं पादं नोत्खिदति सलिलाद्धंस उच्चरंन्।
यदुङ्ग स तमुत्खिदेन्नैवाद्य न श्वः स्यान्न रात्री नाहः स्यान्न व्युच्छेत् कुदा चन २१

अष्टाचक्रं वर्तत एकनेमि सहस्राक्षरं प्र पुरो नि पुश्चा।
अर्धेन विश्वं भुवनं जजान यदस्यार्धं कतमः स केतुः २२ ११५

यो अस्य विश्वजन्मन ईशे विश्वस्य चेष्टतः। अन्येषु क्षिप्रधन्वने तस्मैं प्राण नमोऽस्तु ते २३

यो अस्य सर्वजन्मन ईशे सर्वस्य चेष्टतः। अतन्द्रो ब्रह्मणा धीरः प्राणो मानु तिष्ठतु २४

ऊर्ध्वः सुप्तेषु जागार ननु तिर्यङ् नि पद्यते। न सुप्तमस्य सुप्तेष्वनु शुश्राव कश्चन २५

प्राण मा मत् पर्यावृतो न मदुन्यो भविष्यसि।
अपां गर्भमिव जीवसे प्राण बुध्नामि त्वा मयि २६

वायु-सहचारी देवगणः।

## (१) वायुस्त्वष्टा।

॥ ३७ ॥ ( अथर्व० ३।२०।१० )

( १२० ) वसिष्ठः। अनुष्टुप्।

गोसनिं वाचमुदेयं वर्चसा माभ्युदिहि। आ रुन्धां सर्वतो वायुस्त्वष्टा पोषं दधातु मे १० १२०

## (२) वाय्वन्तरिक्षे।

॥ ३८ ॥ ( अथर्व० ४।३९।२-४ )

(१२१-२३) अङ्गिराः। २,४ संस्तारपंक्तिः, ३ त्रिपदा महाबृहती।

पृथिवी धेनुस्तस्यां अग्निर्वत्सः। सा मेऽग्निना वत्सेनेषमूर्जं कामं दुहाम्।
आयुः प्रथमं प्रजां पोषं रयिं स्वाहा २

अन्तरिक्षे वायवे समनमन्त्स आर्ध्नोत्। यथान्तरिक्षे वायवे समनमन्नेवा मह्यं संनमः सं नमन्तु ३

अन्तरिक्षं धेनुस्तस्यां वायुर्वत्सः। सा मे वायुना वत्सेनेषमूर्जं कामं दुहाम्।
आयुः प्रथमं प्रजां पोषं रयिं स्वाहा ४ १२३

---

# १२ वरुणः।

॥ १ ॥ ( ऋ० १।२४।६-१५ )+

( १-३१ ) शुनःशेप आजीगर्तिः स कृत्रिमो वैश्वामित्रो देवरातः । त्रिष्टुप् ।

नहि ते क्षत्रं न सहो न मन्युं वयश्चनामी पतयन्त आपुः ।
नेमा आपो अनिमिषं चरन्ती-र्न ये वातस्य प्रमिनन्त्यभ्वम् ॥ ६

अबुध्ने राजा वरुणो वनस्यो-र्ध्वं स्तूपं ददते पूतदक्षः ।
नीचीनाः स्थुरुपरि बुध्न एषा-मस्मे अन्तर्निहिताः केतवः स्युः ॥ ७ १२५

उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ ।
अपदे पादा प्रतिधातवेऽक-रुतापवक्ता हृदयाविधश्चित् ॥ ८

शतं ते राजन् भिषजः सहस्र-मुर्वी गभीरा सुमतिष्टे अस्तु ।
बाधस्व दूरे निरृतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ॥ ९

अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद् दिवेयुः ।
अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥ १०(५)

तत् त्वा यामि ब्रह्मणा वन्दमान-स्तदा शास्ते यजमानो हविर्भिः ।
अहेळमानो वरुणेह बोध्यु-रुशंस मा न आयुः प्र मोषीः ॥ ११

तदिन्नक्तं तद् दिवा मह्यमाहु-स्तदयं केतो हृद आ वि चष्टे ।
शुनःशेपो यमह्वद् गृभीतः सो अस्मान् राजा वरुणो मुमोक्तु ॥ १२ १३०

शुनःशेपो ह्यह्वद् गृभीत-स्त्रिष्वादित्यं द्रुपदेषु बद्धः ।
अवैनं राजा वरुणः ससृज्याद् विद्वाँ अदब्धो वि मुमोक्तु पाशान् ॥ १३

अव ते हेळो वरुण नमोभि-रव यज्ञेभिरीमहे हविर्भिः ।
क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनांसि शिश्रथः कृतानि ॥ १४

उदुत्तमं वरुण पाशमस्म-दवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते तवा-नागसो अदितये स्याम ॥ १५(१०)१३३

---

+ ऋ. १।२४।८,११,१५= वा. य. ८,२३; १२,१२, १८,४९; २१,२ ।

॥ २ ॥ ( ऋ० १।२५।१-२१ ) गायत्री ।+

यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम् । मिनीमसि द्यविद्यवि १

मा नो वधाय हत्नवे जिहीळानस्य रीरधः । मा हृणानस्य मन्यवे २ १३९

वि मृळीकाय ते मनो रथीरश्वं न संदितम् । गीर्भिर्वरुण सीमहि ३

परा हि मे विमन्यवः पतन्ति वस्यइष्टये । वयो न वसतीरुप ४

कदा क्षत्रश्रियं नर मा वरुणं करामहे । मृळीकायोरुचक्षसम् ५(१५)

तदित् समानमाशाते वेनन्ता न प्र युच्छतः । धृतव्रताय दाशुषे ६

वेदा यो वीनां पद मन्तरिक्षेण पतताम् । वेद नावः समुद्रियः ७

वेद मासो धृतव्रतो द्वादश प्रजावतः । वेदा य उपजायते ८

वेद वातस्य वर्तनि मुरोर्ऋष्वस्य बृहतः । वेदा ये अध्यासते ९

नि षसाद धृतव्रतो वरुणः पस्त्या३स्वा । साम्राज्याय सुक्रतुः १०(२०)

अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति । कृतानि या च कर्त्वा ११

स नो विश्वाहा सुक्रतु रादित्यः सुपथा करत् । प्र ण आयूंषि तारिषत् १२

बिभ्रद् द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम् । परि स्पशो नि षेदिरे १३

न यं दिप्सन्ति दिप्सवो न द्रुह्वाणो जनानाम् । न देवमभिमातयः १४

उत यो मानुषेष्वा यशश्चक्रे असाम्या । अस्माकमुदरेष्वा १५(२५)

परा मे यन्ति धीतयो गावो न गव्यूतीरनु । इच्छन्तीरुरुचक्षसम् १६

सं नु वोचावहै पुन र्यतो मे मध्वाभृतम् । होतेव क्षदसे प्रियम् १७ १५०

दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि । एता जुषत मे गिरः १८

इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युरा चके १९

त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि । स यामनि प्रति श्रुधि २०

उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत । अवाधमानि जीवसे २१(३१)

॥ ३ ॥ ( ऋ० २।२८।१-११ )

( ३२-४२ ) कूर्मो गार्त्समदो, गृत्समदो वा । ( १० दुःस्वप्ननाशिनी ) । त्रिष्टुप् ।

इदं कवेरादित्यस्य स्वराजो विश्वानि सान्त्यभ्यस्तु मह्ना ।
अति यो मन्द्रो यजथाय देवः सुकीर्तिं भिक्षे वरुणस्य भूरेः १

तव व्रते सुभगासः स्याम स्वाध्यो वरुण तुष्टुवांसः ।
उपायन उषसां गोमतीना मग्नयो न जरमाणा अनु द्यून् २ १५१

---

+ ऋ. १,२५,१०; १९= वा. य. १०,२७; २१,१; सा. १५८५ ।

तव स्याम पुरुवीरस्य शर्मन्नुरुशंसस्य वरुण प्रणेतः ।
यूयं नः पुत्रा अदितेरदब्धा अभि क्षमध्वं युज्याय देवाः ॥ ३ १५७

प्र सीमादित्यो असृजद् विधर्ताँ ऋतं सिन्धवो वरुणस्य यन्ति ।
न श्राम्यन्ति न वि मुचन्त्येते वयो न पप्तू रघुया परिज्मन् ॥ ४(३५)

वि मच्छ्रथाय रशनामिवाग ऋध्याम ते वरुण खामृतस्य ।
मा तन्तुश्छेदि वयतो धियं मे मा मात्रा शार्यपसः पुर ऋतोः ॥ ५

अपो सु म्यक्ष वरुण भियसं मत् सम्राळृतावोऽनु मा गृभाय ।
दामेव वत्साद् वि मुमुग्ध्यंहो नहि त्वदारे निमिषश्चनेशे ॥ ६

मा नो वधैर्वरुण ये त इष्टावेनः कृण्वन्तमसुर भ्रीणन्ति ।
मा ज्योतिषः प्रवसथानि गन्म वि षू मृधः शिश्रथो जीवसे नः ॥ ७

नमः पुरा ते वरुणोत नूनमुतापरं तुविजात ब्रवाम ।
त्वे हि कं पर्वते न श्रितान्यप्रच्युतानि दूळभ व्रतानि ॥ ८

परं ऋणा सावीरध मत्कृतानि माऽहं राजन्नन्यकृतेन भोजम् ।
अव्युष्टा इन्नु भूयसीरुषास आ नो जीवान् वरुण तासु शाधि ॥ ९(४०)

यो मे राजन् युज्यो वा सखा वा स्वप्ने भयं भीरवे मह्यमाह ।
स्तेनो वा यो दिप्सति नो वृको वा त्वं तस्माद्वरुण पाह्यस्मान् ॥ १०

माऽहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः ।
मा रायो राजन्त्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥ ११ १६५

॥ ४ ॥ ( ऋ० ५।८५।१-८ )
( ४३-५० ) अत्रिर्भौमः । त्रिष्टुप् ।

प्र सम्राजे बृहदर्चा गभीरं ब्रह्म प्रियं वरुणाय श्रुताय ।
वि यो जघान शमितेव चर्मोपस्तिरे पृथिवीं सूर्याय ॥ १

वनेषु व्य१न्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु ।
हृत्सु क्रतुं वरुणो अप्स्व१ग्निं दिवि सूर्यमदधात् सोममद्रौ ॥ २

नीचीनबारं वरुणः कवन्धं प्र ससर्ज रोदसी अन्तरिक्षम् ।
तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ॥ ३(४५)१६८

* ऋ. ५।८५।२= वा. य. ४।३१

उनत्ति भूमिं पृथिवीमुत द्यां यदा दुग्धं वरुणो वष्ट्यादित्। 
समभ्रेण वसत पर्वतास—स्तविषीयन्तः श्रथयन्त वीराः ४

इमामू ष्वासुरस्य श्रुतस्य मही मायां वरुणस्य प्र वोचम्। 
मानेनेव तस्थिवाँ अन्तरिक्षे वि यो ममे पृथिवीं सूर्येण ५ १७०

इमामू नु कवितमस्य मायां महीं देवस्य नकिरा दधर्ष। 
एकं यदुद्ना न पृणन्त्येनी—रासिञ्चन्तीरवनयः समुद्रम् ६

अर्यम्यं वरुण मित्र्यं वा सखायं वा सदमिद् भ्रातरं वा। 
वेशं वा नित्यं वरुणारणं वा यत् सीमागश्चकृमा शिश्रथस्तत् ७

कितवासो यद्रिरिपुर्न दीवि यद् वा घा सत्यमुत यन्न विद्म। 
सर्वा ता वि ष्य शिथिरेव देवा—धा ते स्याम वरुण प्रियासः ८(५०)

॥ ५ ॥ ( ऋ० ७।८६।१-८ )
( ५१-७७ ) मैत्रावरुणिर्वसिष्ठः। त्रिष्टुप्।

धीरा त्वस्य महिना जनूंषि वि यस्तस्तम्भ रोदसी चिदुर्वी। 
प्र नाकमृष्वं नुनुदे बृहन्तं द्विता नक्षत्रं पप्रथच्च भूम १

उत स्वया तन्वा३ सं वदे तत् कदा न्व१न्तर्वरुणे भुवानि। 
किं मे हव्यमहृणानो जुषेत कदा मृळीकं सुमना अभि ख्यम् २ १७५

पृच्छे तदेनो वरुण दिदृक्षू—पो एमि चिकितुषो विपृच्छम्। 
समानमिन्मे कवयश्चिदाहु—रयं ह तुभ्यं वरुणो हृणीते ३

किमाग आस वरुण ज्येष्ठं यत् स्तोतारं जिघांससि सखायम्। 
प्र तन्मे वोचो दूळभ स्वधावो ऽव त्वानेना नमसा तुर इयाम् ४

अव द्रुग्धानि पित्र्या सृजा नो ऽव या वयं चकृमा तनूभिः। 
अव राजन् पशुतृपं न तायुं सृजा वत्सं न दाम्नो वसिष्ठम् ५(५५)

न स स्वो दक्षो वरुण ध्रुतिः सा सुरा मन्युर्विभीदको अचित्तिः। 
अस्ति ज्यायान् कनीयस उपारे स्वप्नश्चनेदनृतस्य प्रयोता ६

अरं दासो न मीळ्हुषे करा—ण्यहं देवाय भूर्णयेऽनागाः। 
अचेतयदचितो देवो अर्यो गृत्सं राये कवितरो जुनाति ७

अयं सु तुभ्यं वरुण स्वधावो हृदि स्तोम उपश्रितश्चिदस्तु। 
शं नः क्षेमे शमु योगे नो अस्तु यूयं पात स्वस्तिभिः सदा नः ८ १८१

॥ ६ ॥ ( ऋ० ७।८७।१-७ )

रदत् पथो वरुणः सूर्याय प्राणांसि समुद्रिया नदीनाम् ।
सर्गो न सृष्टो अर्वतीर्ऋतायञ्चकार महीरवनीरहभ्यः ॥ १

आत्मा ते वातो रज आ नवीनोत् पशुर्न भूर्णिर्यवसे ससवान् ।
अन्तर्मही बृहती रोदसीमे विश्वा ते धाम वरुण प्रियाणि ॥ २

परि स्पशो वरुणस्य स्मदिष्टा उभे पश्यन्ति रोदसी सुमेके ।
ऋतावानः कवयो यज्ञधीराः प्रचेतसो य इषयन्त मन्म ॥ ३

उवाच मे वरुणो मेधिराय त्रिः सप्त नामाघ्न्या बिभर्ति ।
विद्वान् पदस्य गुह्या न वोचद्युगाय विप्र उपराय शिक्षन् ॥ ४ १८५

तिस्रो द्यावो निहिता अन्तरस्मिन् तिस्रो भूमीरुपराः षड्विधानाः ।
गृत्सो राजा वरुणश्चक्र एतं दिवि प्रेङ्खं हिरण्ययं शुभे कम् ॥ ५

अव सिन्धुं वरुणो द्यौरिव स्थाद् द्रप्सो न श्वेतो मृगस्तुविष्मान् ।
गम्भीरशंसो रजसो विमानः सुपारक्षत्रः सतो अस्य राजा ॥ ६

यो मृळयाति चक्रुषे चिदागो वयं स्याम वरुणे अनागाः ।
अनु व्रतान्यदितेर्ऋधन्तो यूयं पात स्वस्तिभिः सदा नः ॥ ७(६५)

॥ ७ ॥ ( ऋ० ७।८८।१-७ ) [ ७ पाशविमोचनी ]।

प्र शुन्ध्युवं वरुणाय प्रेष्ठां मतिं वसिष्ठ मीळ्हुषे भरस्व ।
य ईमर्वाञ्चं करते यजत्रं सहस्रामघं वृषणं बृहन्तम् ॥ १

अधा न्वस्य संदृशं जगन्वानग्नेरनीकं वरुणस्य मंसि ।
स्व१र्यदश्मन्नधिपा उ अन्धोऽभि मा वपुर्दृशये निनीयात् ॥ २ १९०

आ यद्रुहाव वरुणश्च नावं प्र यत् समुद्रमीरयाव मध्यम् ।
अधि यदपां स्नुभिश्चराव प्र प्रेङ्ख ईङ्खयावहै शुभे कम् ॥ ३

वसिष्ठं ह वरुणो नाव्याधादृषिं चकार स्वपा महोभिः ।
स्तोतारं विप्रः सुदिनत्वे अह्नां यान्नु द्यावस्ततनन् यादुषासः ॥ ४

क१ त्यानि नौ सख्या बभूवुः सचावहे यदवृकं पुरा चित् ।
बृहन्तं मानं वरुण स्वधावः सहस्रद्वारं जगमा गृहं ते ॥ ५(७०)

य आपिर्नित्यो वरुण प्रियः सन् त्वामागांसि कृणवत् सखा ते ।
मा त एनस्वन्तो यक्षिन् भुजेम यन्धि ष्मा विप्रः स्तुवते वरूथम् ॥ ६ १९४

ध्रुवासु त्वासु क्षितिषु क्षियन्तो व्य१स्मत् पाशं वरुणो मुमोचत्।
अवो वन्वाना अदितेरुपस्थाद् यूयं पात स्वस्तिभिः सदा नः ७ १९५

॥ ८ ॥ ( ऋ० ७।८९।१-५ ) गायत्री, ५ जगती।

मो षु वरुण मृन्मयं गृहं राजन्नहं गमम् । मृळा सुक्षत्र मृळय १
यदेमि प्रस्फुरन्निव दृतिर्न ध्मातो अद्रिवः । मृळा सुक्षत्र मृळय २
क्रत्वः समह दीनता प्रतीपं जगमा शुचे । मृळा सुक्षत्र मृळय ३(७५)
अपां मध्ये तस्थिवांसं तृष्णाविदज्जरितारम् । मृळा सुक्षत्र मृळय ४
यत् किं चेदं वरुण दैव्ये जने ऽभिद्रोहं मनुष्या३श्चरामसि।
अचित्ती यत् तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ×५ २००

॥ ९ ॥ ( ऋ० ८।४१।१-१० )
( ७८-८७ ) नाभाकः काण्वः। महापङ्क्तिः।

अस्मा ऊ षु प्रभूतये वरुणाय मरुद्भ्यो ऽर्चा विदुष्टरेभ्यः।
यो धीता मानुषाणां पश्वो गाइव रक्षति नभन्तामन्यके समे १
तमू षु समना गिरा पितॄणां च मन्मभिः।
नाभाकस्य प्रशस्तिभि-र्यः सिन्धूनामुपोदये सप्तस्वसा स मध्यमो नभन्तामन्यके समे २
स क्षपः परि षस्वजे न्यु१स्रो मायया दधे स विश्वं परि दर्शतः।
तस्य वेनीरनु व्रत-मुषस्तिस्रो अवर्धयन् नभन्तामन्यके समे ३(८०)
यः ककुभो निधारयः पृथिव्यामधि दर्शतः।
स माता पूर्व्यं पदं तद्वरुणस्य सप्त्यं स हि गोपाइवेर्यो नभन्तामन्यके समे ४
यो धर्ता भुवनानां य उस्राणामपीच्या३ वेद नामानि गुह्या।
स कविः काव्या पुरु रूपं द्यौरिव पुष्यति नभन्तामन्यके समे ५ २०५
यस्मिन् विश्वानि काव्या चक्रे नाभिरिव श्रिता।
त्रितं जूती सपर्यत व्रजे गावो न संयुजे युजे अश्वाँ अयुक्षत नभन्तामन्यके समे ६
य आस्वत्क आशये विश्वा जातान्येषाम्।
परि धामानि मर्मृशद् वरुणस्य पुरो गये विश्वे देवा अनु व्रतं नभन्तामन्यके समे ७
स समुद्रो अपीच्य-स्तुरो द्यामिव रोहति नि यदासु यजुर्दधे।
स माया अर्चिना पदा ऽस्तृणान्नाकमारुह-न्नभन्तामन्यके समे ८(८५)२०८

× ऋ ७, ८९, ५ = अथर्व. ६, ५१, ३।

यस्यं श्वेता विंचक्षणा तिस्रो भूमीरधिक्षितः ।
त्रिरुत्तराणि पप्रतुर्वरुणस्य ध्रुवं सदुः स सप्तानामिरज्यति नभन्तामन्यके समे ९
यः श्वेताँ अधिनिर्णिजश्चक्रे कृष्णाँ अनु व्रता ।
स धाम पूर्व्यं ममे यः स्कम्भेन वि रोदसी अजो न द्यामधारयन्नभन्तामन्यके समे १० ११०

॥ १० ॥ ( ऋ० ८।४२।१-३ )
( ८८-९० ) नाभाकः काण्वः, अर्चनाना आत्रेयो वा। त्रिष्टुप्।

अस्तभ्नाद् द्यामसुरो विश्ववेदा अमिमीत वरिमाणं पृथिव्याः ।
आसीदुद् विश्वा भुवनानि सम्राड् विश्वेत् तानि वरुणस्य व्रतानि *१
एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य गोपाम् ।
स नः शर्म त्रिवरूथं वि यंसत् पातं नो द्यावापृथिवी उपस्थे २
इमां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुण सं शिशाधि ।
ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेम ३(९०)

॥ ११ ॥ ( ऋ० ८।६९।११ उत्तरार्धस्य- १२)
( ९१-९२ ) प्रियमेध आङ्गिरसः । पंक्तिः ।

वरुण इदिह क्षयत् तमापो अभ्यनूषत वत्सं संशिश्वरीरिव (उत्तरार्धः) ११
सुदेवो असि वरुण यस्य ते सप्त सिन्धवः । अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव १२ ११५

॥ १२ ॥ ( ऋ० १०।१२४।५, ७-८ )
( ९३-९५ ) अग्नि-वरुण-सोमाः । त्रिष्टुप्, ७ जगती ।

निर्माया उ त्ये असुरा अभूवन् त्वं च मा वरुण कामयासे ।
ऋतेन राजन्ननृतं विविञ्चन् मम राष्ट्रस्याधिपत्यमेहि ५
कविः कवित्वा दिवि रूपमासजदप्रभूती वरुणो निरपः सृजत् ।
क्षेमं कृण्वाना जनयो न सिन्धवस्ता अस्य वर्णं शुचयो भरिभ्रति ७
ता अस्य ज्येष्ठमिन्द्रियं सचन्ते ता ईमा क्षेति स्वधया मदन्तीः ।
ता ईं विशो न राजानं वृणाना बीभत्सुवो अप वृत्राददतिष्ठन् ८(९५)

॥ १३ ॥ [ ९६-१०० ] ( वा० य० ४।३६ )

वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो वरुणस्य ऋतसदन्यसि
वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमा सीद ३६ ११९

---

* ऋ. ८।४२।१=वा. य. ८।३०

॥ १४ ॥ ( वा० य० ८।२३ [ तृ. च. ] । )

नमो वरुणायाभिष्ठितो वरुणस्य पाशः २३ २२०

॥ १५ ॥ ( वा० य० १०।७ )

सधमादो द्युम्निनीराप एता अनाधृष्टा अपस्यो वसानाः ।
पस्त्यासु चक्रे वरुणः सधस्थमपाꣳ शिशुर्मातृतमास्वन्तः ७

॥ १६ ॥ ( वा० य० २०।७१-७२ )

सविता वरुणो दधद्यजमानाय दाशुषे । आदत्त नमुचेर्वसु सुत्रामा बलमिन्द्रियम् ७१
वरुणः क्षत्रमिन्द्रियं भगेन सविता श्रियम् । सुत्रामा यशसा बलं दधाना यज्ञमाशत ७२(१००)

॥ १७ ॥ ( अथर्व० १।३।३ )
( १०१-१९ ) अथर्वा । पथ्यापंक्तिः ।

विद्मा शरस्य पितरं वरुणं शतवृष्ण्यम् ।
तेना ते तन्वे३ शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ३

॥ १८॥ ( अथर्व० १।१०।१-४ )
१-२ त्रिष्टुप्, ३ ककुम्मती अनुष्टुप्, ४ अनुष्टुप्।

अयं देवानामसुरो वि राजति वशा हि सत्या वरुणस्य राज्ञः ।
ततस्परि ब्रह्मणा शाशदान उग्रस्य मन्योरुदिमं नयामि १ २२५

नमस्ते राजन् वरुणास्तु मन्यवे विश्वं ह्युग्र निचिकेषि द्रुग्धम् ।
सहस्रमन्यान् प्र सुवामि साकं शतं जीवाति शरदस्तवायम् २
यदुवक्थानृतं जिह्वया वृजिनं बहु । राज्ञस्त्वा सत्यधर्मणो मुञ्चामि वरुणादहम् ३
मुञ्चामि त्वा वैश्वानरादर्णवान्महतस्परि । सजातानुग्रेहा वद ब्रह्म चाप चिकीहि नः ४(१०५)

॥ १९ ॥ ( अथर्व० १।२०।३ ) अनुष्टुप्।

इतश्च यदमुतश्च यद्वधं वरुण यावय। वि महच्छर्म यच्छ वरीयो यावया वधम् ३

॥ २० ॥ ( अथर्व० ४।१५।१२ ) पञ्चपदानुष्टुब्गर्भा भुरिक्।

अपो निषिञ्चन्नसुरः पिता नः श्वसन्तु गर्गरा अपां वरुणाव नीचीरपः सृज ।
वदन्तु पृश्निबाहवो मण्डूका इरिणानु १२ २३०

॥ २१ ॥ ( अथर्व० ५।११।१-११ )

( प्रश्नोत्तरम् )। त्रिष्टुप्, १ भुरिक्, ३ पङ्क्तिः, ६ पञ्चपदा अतिशक्वरी,
११ त्र्यवसाना षट्पदा अत्यष्टिः।

कथं महे असुरायाब्रवीरिह कथं पित्रे हरये त्वेषनृम्णः।
पृश्निं वरुण दक्षिणां ददावान् पुनर्मघ त्वं मनसाचिकित्सीः १

न कामेन पुनर्मघो भवामि सं चक्षे कं पृश्निमेतामुपाजे।
केन नु त्वमथर्वन् काव्येन केन जातेनासि जातवेदाः २

सत्यमहं गभीरः काव्येन सत्यं जातेनास्मि जातवेदाः।
न मे दासो नार्यो महित्वा व्रतं मीमाय यदहं धरिष्ये ३(११०)

न त्वदन्यः कवितरो न मेधया धीरतरो वरुण स्वधावन्।
त्वं ता विश्वा भुवनानि वेत्थ स चिन्नु त्वज्जनो मायी बिभाय ४

त्वं ह्य१ङ्ग वरुण स्वधावन् विश्वा वेत्थ जनिमा सुप्रणीते।
किं रजस एना परो अन्यदस्त्येना किं परेणावरममुर ५ २३५

एकं रजस एना परो अन्यदस्त्येना पर एकेन दुर्णशं चिदर्वाक्।
तत् ते विद्वान् वरुण प्र ब्रवीम्यधोवचसः पणयो भवन्तु
नीचैर्दासा उप सर्पन्तु भूमिम् ६

त्वं ह्य१ङ्ग वरुण ब्रवीषि पुनर्मघेष्ववद्यानि भूरि।
मो षु पणीँरभ्ये३तावतो भून्मा त्वा वोचन्नराधसं जनासः ७

मा मा वोचन्नराधसं जनासः पुनस्ते पृश्निं जरितर्ददामि।
स्तोत्रं मे विश्वमा याहि शचीभिरन्तर्विश्वासु मानुषीषु दिक्षु ८(११५)

आ ते स्तोत्राण्युद्यतानि यन्त्वन्तर्विश्वासु मानुषीषु दिक्षु।
देहि नु मे यन्मे अदत्तो असि युज्यो मे सप्तपदः सखाऽसि ९

समा नौ बन्धुर्वरुण समा जा वेदाहं तद्यन्नावेषा समा जा।
ददामि तद्यत्ते अदत्तो अस्मि युज्यस्ते सप्तपदः सखाऽस्मि १०

देवो देवाय गृणते वयोधा विप्रो विप्राय स्तुवते सुमेधाः।
अजीजनो हि वरुण स्वधावन्नथर्वाणं पितरं देवबन्धुम्।
तस्मा उ राधः कृणुहि सुप्रशस्तं सखा नो असि परमं च बन्धुः ११ २४१

॥ २२ ॥ ( अथर्व० ५।२४।४ ) चतुष्पदाऽतिशक्वरी ।

वरुणोऽपामधिपतिः स मावतु ।
अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां प्रतिष्ठायामस्यां
चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां देवहूत्यां स्वाहा ४(११९)

॥ २३ ॥ ( अथर्व० ५।१।१-९ )
( १२०-३७ ) बृहद्दिवोऽथर्वा । त्रिष्टुप्, ५ पराबृहती त्रिष्टुप्, ७ विराट्, ९ त्र्यवसाना षट्पदा अत्यष्टिः ।

ऋधङ्मन्त्रो योनिं य आबभूवामृतासुर्वर्धमानः सुजन्मा ।
अदब्धासुर्भ्राजमानोऽहेव त्रितो धर्ता दाधार त्रीणि १
आ यो धर्माणि प्रथमः ससाद ततो वपूंषि कृणुषे पुरूणि ।
धास्युर्योनिं प्रथम आ विवेशा यो वाचमनुदितां चिकेत २
यस्ते शोकाय तन्वं रिरेच क्षरद्धिरण्यं शुचयोऽनु स्वाः ।
अत्रा दधेते अमृतानि नामास्मे वस्त्राणि विश एरयन्ताम् ३ १४५
प्र यदेते प्रतरं पूर्व्यं गुः सदःसद आतिष्ठन्तो अजुर्यम् ।
कविः शुषस्य मातरा रिहाणे जाम्यै धुर्यं पतिमेरयेथाम् ४
तदू षु ते महत् पृथुज्मन्नमः कविः काव्येना कृणोमि ।
यत् सम्यञ्चावभियन्तावभि क्षामत्रा मही रोधचक्रे वावृधेते ५
सप्त मर्यादाः कवयस्ततक्षुस्तासामिदेकामभ्यंहुरो गात् ।
आयोर्ह स्कम्भ उपमस्य नीडे पथां विसर्गे धरुणेषु तस्थौ ६(१२५)
उतामृतासुर्व्रत एमि कृण्वन्नसुरात्मा तन्वस्तत्सुमद्गुः ।
उत वा शक्रो रत्नं दधात्यूर्जया वा यत् सचते हविर्दाः ७
उत पुत्रः पितरं क्षत्रमीडे ज्येष्ठं मर्यादमह्वयन्त्स्वस्तये ।
दर्शन्नु ता वरुण यास्ते विष्ठा आवर्वृततः कृणवो वपूंषि ८
अर्धमर्धेन पयसा पृणक्ष्यर्धेन शुष्म वर्धसे अमुर ।
अविं वृधाम शग्मियं सखायं वरुणं पुत्रमदित्या इषिरम् ।
कविशस्तान्यस्मै वपूंष्यवोचाम रोदसी सत्यवाचा ९

॥ २४ ॥ ( अथर्व० ५।२।१-९ ) त्रिष्टुप्, ९ भुरिक्परातिजागता त्रिष्टुप् ।

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रूननु यदेनं मदन्ति विश्व ऊमाः १ १५२

वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति ।
अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु २(१३०)
त्वे क्रतुमपि पृञ्चन्ति भूरि द्विर्यदेते त्रिर्भवन्त्यूमाः ।
स्वादोः स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाभि योधीः ३
यदि चिन्नु त्वा धना जयन्तं रणेरणे अनुमदन्ति विप्राः ।
ओजीयः शुष्मिन्त्स्थिरमा तनुष्व मा त्वा दभन् दुरेवासः कशोकाः ४ २५५
त्वया वयं शाशद्महे रणेषु प्रपश्यन्तो युधेन्यानि भूरि ।
चोदयामि त आयुधा वचोभिः सं ते शिशामि ब्रह्मणा वयांसि ५
नि तद्दधिषेऽवरे परे च यस्मिन्नाविथावसा दुरोणे ।
आ स्थापयत मातरं जिगत्नुमत इन्वत कर्वराणि भूरि ६.
स्तुष्व वर्ष्मन् पुरुवर्त्मानं समृभ्वाणमिनतममाप्तमाप्त्यानाम् ।
आ दर्शति शवसा भूर्योजाः प्र सक्षति प्रतिमानं पृथिव्याः ७(१३५)
इमा ब्रह्म बृहद्दिवः कृणवदिन्द्राय शूषमग्रियः स्वर्षाः ।
महो गोत्रस्य क्षयति स्वराजा तुरश्चिद्विश्वमर्णवत् तपस्वान् ८
एवा महान् बृहद्दिवो अथर्वावोचत्स्वां तन्व१मिन्द्रमेव ।
स्वसारौ मातरिभ्वरी अरिप्रे हिन्वन्ति चैने शवसा वर्धयन्ति च ९ २६०

॥ २५ ॥ ( अथर्व० १।१४।१-४ )

( १३८-१४१ ) भृग्वङ्गिराः । यमो ( वा ) । अनुष्टुप्, १ ककुम्मती अनुष्टुप्; ३ चतुष्पाद्विराट् ।

भगमस्या वर्च आदिष्यधि वृक्षादिव स्रजम् । महाबुध्न इव पर्वतो ज्योक् पितृष्वास्ताम् १
एषा ते राजन् कन्या३ वधूर्नि धूयतां यम । सा मातुर्बध्यतां गृहेऽथो भ्रातुरथो पितुः २
एषा ते कुलपा राजन्तामु ते परि दद्मसि । ज्योक् पितृष्वासाता आ शीर्ष्णः समोप्यात् ३(१४०)
असितस्य ते ब्रह्मणा कश्यपस्य गयस्य च । अन्तःकोशमिव जामयोऽपि नह्यामि ते भगम् ४

॥ २६ ॥ ( अथर्व० ४।१६।१-९ )

( १४२-१५० ) ब्रह्मा । वरुणः, सत्यानृतान्वीक्षणम् । त्रिष्टुप्, १ अनुष्टुप्, ५ भुरिक्, ७ जगती,
८ त्रिपान्महाबृहती, ९ विराण्नाम त्रिपाद्गायत्री ।

बृहन्नेषामधिष्ठाता अन्तिकादिव पश्यति । य स्तायन्मन्यते चरन्त्सर्वं देवा इदं विदुः १
यस्तिष्ठति चरति यश्च वञ्चति यो निलायं चरति यः प्रतङ्कम् ।
द्वौ संनिषद्य यन्मन्त्रयेते राजा तद्वेद वरुणस्तृतीयः २ २६६

उतेयं भूमिर्वरुणस्य राज्ञ उतासौ द्यौर्बृहती दूरेअन्ता।
उतो समुद्रौ वरुणस्य कुक्षी उतास्मिन्नल्प उदके निलीनः ३
उत यो द्यामतिसर्पात् परस्तान्न स मुच्यातै वरुणस्य राज्ञः।
दिव स्पशः प्र चरन्तीदमस्य सहस्राक्षा अति पश्यन्ति भूमिम् ४(१४५)
सर्वं तद्राजा वरुणो वि चष्टे यदन्तरा रोदसी यत् परस्तात्।
संख्याता अस्य निमिषो जनानामक्षानिव श्वघ्नी नि मिनोति तानि ५
ये ते पाशा वरुण सप्तसप्त त्रेधा तिष्ठन्ति विषिता रुशन्तः।
छिनन्तु सर्वे अनृतं वदन्तं यः सत्यवाद्यति तं सृजन्तु ६ २७०
शतेन पाशैरभि धेहि वरुणैनं मा ते मोच्यनृतवाङ् नृचक्षः।
आस्तां जाल्म उदरं श्रंसयित्वा कोश इवाबन्धः परिकृत्यमानः ७
यः समाम्योऽ३ वरुणो यो व्याम्योऽ३ यः संदेश्योऽ३ वरुणो यो विदेश्यः।
यो दैवो वरुणो यश्च मानुषः ८
तैस्त्वा सर्वैरभि ष्यामि पाशैरसावामुष्यायणामुष्याः पुत्र। तानु ते सर्वाननुसंदिशामि ९(१५०)

॥ २७ ॥ ( अथर्व० ४।४०।३ )
( १५१ ) शुक्रः। त्रिष्टुप्।

ये पश्चाज्जुह्वति जातवेदः प्रतीच्या दिशोऽभिदासन्त्यस्मान्।
वरुणमृत्वा ते पराञ्चो व्यथन्तां प्रत्यगेनान् प्रतिसरेण हन्मि ३

॥ २८ ॥ ( अथर्व० १०।५।१० )
( १५२ ) सिन्धुद्वीपः। त्र्यवसाना पञ्चपदा विपरीतपादलक्ष्मा बृहती।

वरुणस्य भाग स्थ। अपां शुक्रमापो देवीर्वर्चो अस्मासु धत्त।
प्रजापतेर्वो धाम्नास्मै लोकाय सादये १०

वरुण-सहचारी देवगणः।

## ( १ ) इन्द्राणीवरुणान्यग्नाय्यः।

॥ २९ ॥ ( ऋ० १।२२।१२ )
मेधातिथिः काण्वः। गायत्री।

इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये। अग्नायीं सोमपीतये १२ २७६

## (२) वरुणामित्रार्यमणः।

॥ २२ ॥ ( ऋ० १।४१।१-३,७-९ )
( १५३-५८ ) कण्वो घौरः। गायत्री।

यं रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा । नू चित् स दभ्यते जनः ※१ २७७
यं बाहुतेव पिप्रति पान्ति मर्त्यं रिषः । अरिष्टः सर्व एधते २
वि दुर्गा वि द्विषः पुरो घ्नन्ति राजान एषाम् । नयन्ति दुरिता तिरः ३
कथा राधाम सखायः स्तोमं मित्रस्यार्यम्णः । महि प्सरो वरुणस्य ७
मा वो घ्नन्तं मा शपन्तं प्रति वोचे देवयन्तम् । सुम्नैरिद् व आ विवासे ८
चतुरश्चिद् ददमानाद् बिभीयादा निधातोः । न दुरुक्ताय स्पृहयेत् ९(१५९)

---

# १३ वास्तोष्पतिः।

॥ १ ॥ (ऋ० ७।५४।१-३ )
( १—४ ) मैत्रावरुणिर्वसिष्ठः। त्रिष्टुप्।

वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः।
यत् त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे १(१६०)
वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो।
अजरासस्ते सख्ये स्याम पितेव पुत्रान् प्रति नो जुषस्व २
वास्तोष्पते शग्मया संसदा ते सक्षीमहि रण्वया गातुमत्या।
पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः ३

॥ २ ॥ (ऋ० ७।५५।१ ) गायत्री।

अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन्। सखा सुशेव एधि नः १ २८६

---

※ ऋ. १,४१,१=सा. १८५।

॥ ३ ॥ (ऋ० ८।१७।१४)

(५) इरिम्बिठिः काण्वः। (इंद्रो वा)। बृहती।

वास्तोष्पते ध्रुवा स्थूणांसत्रं सोम्यानाम्।
द्रप्सो भेत्ता पुरां शश्वतीनामिन्द्रो मुनीनां सखा ×१४(५)

॥ ४ ॥ [६-८] (वा० य० ३।४१-४३)+

गृहा मा बिभीत मा वेपध्वमूर्जं बिभ्रत एमसि।
ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः ४१
येषामध्येति प्रवसन् येषु सौमनसो बहुः। गृहानुप ह्वयामहे ते नो जानन्तु जानतः ४२
उपहूता इह गाव उपहूता अजावयः। अथो अन्नस्य कीलाल उपहूतो गृहेषु नः।
क्षेमाय वः शान्त्यै प्रपद्ये शिवꣳ शग्मꣳ शंयोः शंयोः ४३ १९०

॥ ५ ॥ (अथर्व० ३।१२।१-९)

(९-५२) ब्रह्मा। शाला, वास्तोष्पतिः। त्रिष्टुप्, २ विराड् जगती, ३ बृहती, ६ शक्वरीगर्भा जगती, ७ आर्षी अनुष्टुप्, ८ भुरिक्, ९ अनुष्टुप्।

इहैव ध्रुवां नि मिनोमि शालां क्षेमे तिष्ठाति घृतमुक्षमाणा।
तां त्वा शाले सर्ववीराः सुवीरा अरिष्टवीरा उप सं चरेम १
इहैव ध्रुवा प्रति तिष्ठ शालेऽश्वावती गोमती सूनृतावती।
ऊर्जस्वती घृतवती पयस्वत्युच्छ्रयस्व महते सौभगाय २(१०)
धरुण्य॒सि शाले बृहच्छन्दाः पूतिधान्या।
आ त्वा वत्सो गमेदा कुमार आ धेनवः सायमास्पन्दमानाः ३
इमां शालां सविता वायुरिन्द्रो बृहस्पतिर्नि मिनोतु प्रजानन्।
उक्षन्तूद्ना मरुतो घृतेन भगो नो राजा नि कृषिं तनोतु ४
मानस्य पत्नि शरणा स्योना देवी देवेभिर्निमितास्यग्रे।
तृणं वसाना सुमना असस्त्वमथास्मभ्यं सहवीरं रयिं दाः ५ १९५
ऋतेन स्थूणामधि रोह वंशोग्रो विराजन्नप वृङ्क्ष्व शत्रून्।
मा ते रिषन्नुपसत्तारो गृहाणां शाले शतं जीवेम शरदः सर्ववीराः ६
एमां कुमारस्तरुण आ वत्सो जगता सह। एमां परिस्रुतः कुम्भ आ दध्नः कलशैरगुः ७(१५)
पूर्णं नारि प्र भर कुम्भमेतं घृतस्य धारामभूतेन संभृताम्।
इमां पातॄनमृतेना समङ्ग्धीष्टापूर्तमभि रक्षात्येनाम् ८
इमा आपः प्र भराम्ययक्ष्मा यक्ष्मनाशनीः। गृहानुप प्र सीदाम्यमृतेन सहाग्निना ९ १९९

---

× सा. २७५। + अथर्व. ७,६०,१,३ पाठभेदेन,५।

॥ ६ ॥ ( अथर्व० ५।९।१-८ )

वास्तोष्पतिः, आत्मा । १,५ दैवी बृहती; २,६ दैवी त्रिष्टुप्; ३,४ दैवी जगती; ७ विराडुष्णिग्बृहतीगर्भा पञ्चपदा जगती, ८ पुरस्कृतित्रिष्टुब्बृहतीगर्भा चतुष्पदा त्र्यवसाना जगती ।

दिवे स्वाहा १ । पृथिव्यै स्वाहा २ । अन्तरिक्षाय स्वाहा ३
अन्तरिक्षाय स्वाहा ४ । दिवे स्वाहा ५ । पृथिव्यै स्वाहा ६
सूर्यो मे चक्षुर्वातः प्राणो३ऽन्तरिक्षमात्मा पृथिवी शरीरम् ।
अस्तृतो नामाहमयमस्मि स आत्मानं नि दधे द्यावापृथिवीभ्यां गोपीथाय ७
उदायुरुद्बलमुत्कृतमुत्कृत्यामुन्मनीषामुदिन्द्रियम् ।
आयुष्कृदायुष्पत्नी स्वधावन्तौ गोपा मे स्तं गोपायतं मा ।
आत्मसदौ मे स्तं मा मा हिंसिष्टम् ८(२५)२०७

॥ ७ ॥ ( अथर्व० ५।१०।१-८ )

१-६ यवमध्या त्रिपदा गायत्री; ७ यवमध्या ककुप्; ८ पुरोधृतिद्व्यनुष्टुब्गर्भा पराष्टिस्त्र्यवसाना चतुष्पदातिजगती ।

अश्मवर्म मेऽसि यो मा प्राच्या दिशोऽघायुरभिदासात् । एतत् स ऋच्छात् १
अश्मवर्म मेऽसि यो मा दक्षिणाया दिशोऽघायुरभिदासात् । एतत् स ऋच्छात् २
अश्मवर्म मेऽसि यो मा प्रतीच्या दिशोऽघायुरभिदासात् । एतत् स ऋच्छात् ३
अश्मवर्म मेऽसि यो मोदीच्या दिशोऽघायुरभिदासात् । एतत् स ऋच्छात् ४
अश्मवर्म मेऽसि यो मा ध्रुवाया दिशोऽघायुरभिदासात् । एतत् स ऋच्छात् ५(३०)
अश्मवर्म मेऽसि यो मोर्ध्वाया दिशोऽघायुरभिदासात् । एतत् स ऋच्छात् ६
अश्मवर्म मेऽसि यो मा दिशामन्तर्देशेभ्योऽघायुरभिदासात् । एतत् स ऋच्छात् ७
बृहता मन उप ह्वये मातरिश्वना प्राणापानौ ।
सूर्याच्चक्षुरन्तरिक्षाच्छ्रोत्रं पृथिव्याः शरीरम् । सरस्वत्या वाचमुप ह्वयामहे मनोयुजा ८

॥ ८ ॥ ( अथर्व० ५।२६।१-१२ )

वास्तोष्पतिः, १ अग्निः, २ सविता, ३,११ इन्द्रः, ४ निविदः, ५ मरुतः, ६ अदितिः, ७ विष्णुः, ८ त्वष्टा, ९ भगः, १० सोमः, १२ अश्विनौ, बृहस्पतिः । १,५ द्विपदार्षी उष्णिक्; २,४,६,७,८,१०,११ द्विपदा प्राजापत्या बृहती; ३ त्रिपदा विराड् गायत्री; ९ त्रिपदा पिपीलिकमध्या पुरउष्णिक्; (१-११ एकावसानाः) १२ परातिशक्वरी, चतुष्पदा गायत्री ।

यजूंषि यज्ञे समिधः स्वाहाऽग्निः प्रविद्वानिह वो युनक्तु १
युनक्तु देवः सविता प्रजानन्नस्मिन् यज्ञे महिषः स्वाहा २(३५)२१७

तिग्मो विभ्राजन् तन्वं१ शिशानोऽरंगमासः प्रवतो रराणः ।
ज्योतिष्मान् पक्षी महिषो वयोधा विश्वा आऽस्थात् प्रदिशः कल्पमानः ३३ ११५४
चित्रं देवानां केतुरनीकं ज्योतिष्मान् प्रदिशः सूर्य उद्यन् ।
दिवाकरोऽति द्युम्नैस्तमांसि विश्वाऽतारीद्दुरितानि शुक्रः ३४
चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आऽप्राद् द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ३५
उच्चा पतन्तमरुणं सुपर्णं मध्ये दिवस्तरणिं भ्राजमानम् ।
पश्याम त्वा सवितारं यमाहुरजस्रं ज्योतिर्यदविन्ददत्रिः ३६(१३०)
दिवस्पृष्ठे धावमानं सुपर्णमदित्याः पुत्रं नाथकाम उप यामि भीतः ।
स नः सूर्य प्र तिर दीर्घमायुर्मा रिषाम सुमतौ ते स्याम ३७
सहस्राह्ण्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः स्वर्गम् ।
स देवान्त्सर्वानुरस्युपदद्य संपश्यन् याति भुवनानि विश्वा ३८
रोहितः कालो अभवद् रोहितोऽग्रे प्रजापतिः ।
रोहितो यज्ञानां मुखं रोहितः स्व१राऽभरत् ३९ ११६०
रोहितो लोको अभवद् रोहितोऽत्यतपद् दिवम् ।
रोहितो रश्मिभिर्भूमिं समुद्रमनु सं चरत् ४०
सर्वा दिशः समचरद् रोहितोऽधिपतिर्दिवः । दिवं समुद्रमाद्भूमिं सर्वं भूतं वि रक्षति ४१(१३५)
आरोहन्छुक्रो बृहतीरतन्द्रो द्वे रूपे कृणुते रोचमानः ।
चित्रश्चिकित्वान् महिषो वातमाया यावतो लोकानभि यद्विभाति ४२
अभ्य१न्यदेति पर्यन्यदस्यतेऽहोरात्राभ्यां महिषः कल्पमानः ।
सूर्यं वयं रजसि क्षियन्तं गातुविदं हवामहे नाधमानाः ४३
पृथिवीप्रो महिषो नाधमानस्य गातुरदब्धचक्षुः परि विश्वं बभूव ।
विश्वं संपश्यन्त्सुविदत्रो यजत्र इदं शृणोतु यदहं ब्रवीमि ४४ ११६५
पर्यस्य महिमा पृथिवीं समुद्रं ज्योतिषा विभ्राजन् परि द्यामन्तरिक्षम् ।
सर्वं संपश्यन्त्सुविदत्रो यजत्र इदं शृणोतु यदहं ब्रवीमि ४५
अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ ४६(१४०)

॥ ४ ॥ ( अथर्व० १३।३।१-२६ )

त्रिष्टुप्; १ चतुरवसानाऽष्टपदाऽऽकृतिः; २-४ त्र्यव० षट्पदा ( २-३ अष्टिः, २ भुरिक्, ४ अतिशाक्करगर्भा धृतिः); ५-७ चतुरवसाना सप्तपदा ( ५-६ शाक्करातिशाक्करगर्भा प्रकृतिः; ७ अनुष्टुब्गर्भाऽतिधृतिः ); ८ त्र्यवसाना षट्पदा अत्यष्टिः; ९-१९ चतुरवसाना ( ९-१२, १५, १७ सप्तपदा भुरिगतिधृतिः, १५ निचृत्, १७ कृतिः, १३-१४, १६, १८-१९ अष्टपदा [ १३-१४ विकृतिः, १६, १८-१९ आकृतिः, १९ भुरिक् ]); २०, २२ त्र्यवसाना षट्पदा अत्यष्टिः; २१, २३-२५ चतुरवसाना अष्टपदा ( २४ सप्तपदा कृतिः, २३, २५ विकृतिः )।

य इमे द्यावापृथिवी जजान यो द्रापिं कृत्वा भुवनानि वस्ते ।
यस्मिन् क्षियन्ति प्रदिशः षडुर्वीर्याः पतङ्गो अनु विचाकशीति तस्य देवस्य ।
क्रुद्धस्यैतदागो य एवं विद्वांसं ब्राह्मणं जिनाति ।
उद्वेपय रोहित प्र क्षिणीहि ब्रह्मज्यस्य प्रति मुञ्च पाशान् 　　१
यस्माद् वाता ऋतुथा पवन्ते यस्मात् समुद्रा अधि विक्षरन्ति तस्य देवस्य ।०। उद्वेपय० २
यो मारयति प्राणयति यस्मात् प्राणन्ति भुवनानि विश्वा तस्य देवस्य ।०। उद्वेपय० 　३ 　११७०

यः प्राणेन द्यावापृथिवी तर्पयत्यपानेन समुद्रस्य जठरं यः पिपर्ति तस्य देवस्य ।०। उद्वेपय० ४
यस्मिन् विराट् परमेष्ठी प्रजापतिरग्निर्वैश्वानरः सह पङ्क्त्या श्रितः ।
यः परस्य प्राणं परमस्य तेज आददे तस्य देवस्य ।०। उद्वेपय० 　　५(१४५)

यस्मिन् षडुर्वीः पञ्च दिशो अधि श्रिताश्चतस्र आपो यज्ञस्य त्रयोऽक्षराः ।
यो अन्तरा रोदसी क्रुद्धश्चक्षुषैक्षत तस्य देवस्य ।०। उद्वेपय० 　　६
यो अन्नादो अन्नपतिर्बभूव ब्रह्मणस्पतिरुत यः ।
भूतो भविष्यद् भुवनस्य यस्पतिस्तस्य देवस्य ।०। उद्वेपय० 　　७
अहोरात्रैर्विमितं त्रिंशदङ्गं त्रयोदशं मासं यो निर्मिमीते तस्य देवस्य ।०। उद्वेपय० 　८
कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति ।
त आववृत्रन्त्सदनादृतस्य तस्य देवस्य ।०। उद्वेपय० 　　९
यत् ते चन्द्रं कश्यप रोचनावद्यत् संहितं पुष्कलं चित्रभानु ।
यस्मिन्त्सूर्या आर्पिताः सप्त साकं तस्य देवस्य ।०। उद्वेपय० 　　१०(१५०)

बृहदेनमनु वस्ते पुरस्ताद् रथंतरं प्रति गृह्णाति पश्चात् ।
ज्योतिर्वसाने सदमप्रमादं तस्य देवस्य ।०। उद्वेपय० 　　११ 　११७८

बृहदन्यतः पक्ष आसीद् रथंतरमन्यतः सबले सध्रीची।
यद् रोहितमजनयन्त देवास्तस्य देवस्य ।०। उद्वेपय० १२
स वरुणः सायमग्निर्भवति स मित्रो भवति प्रातरुद्यन्।
स सविता भूत्वाऽन्तरिक्षेण याति स इन्द्रो भूत्वा तपति मध्यतो दिवं
तस्य देवस्य ।०। उद्वेपय० १३ ११८०
सहस्राह्ण्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः स्वर्गम्।
स देवान्त्सर्वानुरस्युपदद्य संपश्यन् याति भुवनानि विश्वा तस्य देवस्य ।०। उद्वेपय० १४
अयं स देवो अप्स्व१न्तः सहस्रमूलः पुरुशाको अत्त्रिः।
य इदं विश्वं भुवनं जजान तस्य देवस्य ।०। उद्वेपय० १५(१५५)
शुक्रं वहन्ति हरयो रघुष्यदो देवं दिवि वर्चसा भ्राजमानम्।
यस्योर्ध्वा दिवं तन्व१स्तपन्त्यर्वाङ् सुवर्णैः पटरैर्वि भाति तस्य देवस्य ।०। उद्वेपय० १६
येनादित्यान् हरितः संवहन्ति येन यज्ञेन बहवो यन्ति प्रजानन्तः।
यदेकं ज्योतिर्बहुधा विभाति तस्य देवस्य ।०। उद्वेपय० १७
सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुस्तस्य देवस्य ।०। उद्वेपय० १८ ११८५
अष्टधा युक्तो वहति वह्निरुग्रः पिता देवानां जनिता मतीनाम्।
ऋतस्य तन्तुं मनसा मिमानः सर्वा दिशः पवते मातरिश्वा तस्य देवस्य ।०। उद्वेपय० १९
सम्यञ्चं तन्तुं प्रदिशोऽनु सर्वा अन्तर्गायत्र्याममृतस्य गर्भे तस्य देवस्य ।०। उद्वेपय० २०
निम्रुचस्तिस्रो व्युषो ह तिस्रस्त्रीणि रजांसि दिवो अङ्ग तिस्रः।
विद्मा ते अग्ने त्रेधा जनित्रं त्रेधा देवानां जनिमानि विद्म तस्य देवस्य ।०। उद्वेपय० २१
वि य और्णोत् पृथिवीं जायमान आ समुद्रमदधादन्तरिक्षे तस्य देवस्य ।०। उद्वेपय० २२
त्वमग्ने क्रतुभिः केतुभिर्हितोऽ३ऽर्कः समिद्ध उदरोचथा दिवि।
किमभ्यार्चन् मरुतः पृश्निमातरो यद्रोहितमजनयन्त देवास्तस्य देवस्य ।०। उद्वेपय० २३ ११९०
य आत्मदा बलदा यस्य विश्वे उपासते प्रशिषं यस्य देवाः।
योऽ३ऽस्येशे द्विपदो यश्चतुष्पदस्तस्य देवस्य ।०। उद्वेपय० २४
एकपाद् द्विपदो भूयो वि चक्रमे द्विपात् त्रिपादमभ्येति पश्चात्।
चतुष्पाच्चक्रे द्विपदामभिस्वरे संपश्यन् पङ्क्तिमुपतिष्ठमानस्तस्य देवस्य ।०। उद्वेपय० २५(१६५)
कृष्णायाः पुत्रो अर्जुनो रात्र्या वत्सोऽजायत। स ह द्यामधि रोहति रुहो रुरोह रोहितः २६

॥५॥ ( अथर्व० १३।४।१-५४ )

प्रथमः पर्यायः ॥ १ ॥

त्रिष्टुप्; (षट् पर्यायाः) । [ अध्यात्मम् ]। १-११ प्राजापत्याऽनुष्टुप्; १२ विराड्गायत्री; १३ आसुरी उष्णिक् ।

स एति सविता स्वर्दिवस्पृष्ठेऽवचाकशत् १ रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृतः २
स धाता स विधर्ता स वायुर्नभ उच्छ्रितम् । रश्मिभिर्नभ० ३
सोऽर्यमा स वरुणः स रुद्रः स महादेवः । रश्मिभिर्नभ० ४(१७०)
सो अग्निः स उ सूर्यः स उ एव महायमः । रश्मिभिर्नभ० ५
तं वत्सा उप तिष्ठन्त्येकशीर्षाणो युता दश । रश्मिभिर्नभ० ६
पश्चात् प्राञ्च आ तन्वन्ति यदुदेति वि भासति । रश्मिभिर्नभ० ७
तस्यैष मारुतो गणः स एति शिक्याकृतः ८ रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृतः ९
तस्येमे नव कोशा विष्टम्भा नवधा हिताः १० स प्रजाभ्यो वि पश्यति यच्च प्राणति यच्च न ११
तमिदं निगतं सहः स एष एक एकवृदेक एव १२ एते अस्मिन् देवा एकवृतो भवन्ति १३ १२०६

द्वितीयः पर्यायः ॥ २ ॥

१४ भुरिक्साम्नी त्रिष्टुप्; १५ आसुरी पंक्तिः; १६, १९ प्राजापत्याऽनुष्टुप्; १७-१८ आसुरी गायत्री ।

कीर्तिश्च यशश्चाम्भश्च नभश्च ब्राह्मणवर्चसं चान्नं चान्नाद्यं च १४ य एतं देवमेकवृतं वेद १५(१८१)
न द्वितीयो न तृतीयश्चतुर्थो नाप्युच्यते । य एतं० १६
न पञ्चमो न षष्ठः सप्तमो नाप्युच्यते । य एतं० १७
नाष्टमो न नवमो दशमो नाप्युच्यते । य एतं० १८
स सर्वस्मै वि पश्यति यच्च प्राणति यच्च न । य एतं० १९
तमिदं निगतं सहः स एष एक एकवृदेक एव । य एतं० २०
सर्वे अस्मिन् देवा एकवृतो भवन्ति । य एतं० २१ १२१४

तृतीयः पर्यायः ॥ ३ ॥

२२,२४ भुरिक्प्राजापत्या त्रिष्टुप्; २३ आर्ची गायत्री; २५ एकपदाऽऽसुरी गायत्री; २६ आर्ची अनुष्टुप्; २७-२८ प्राजापत्याऽनुष्टुप् ।

ब्रह्म च तपश्च कीर्तिश्च यशश्चाम्भश्च नभश्च ब्राह्मणवर्चसं चान्नं चान्नाद्यं च । य एतं० २२
भूतं च भव्यं च श्रद्धा च रुचिश्च स्वर्गश्च स्वधा च २३ य एतं देवमेकवृतं वेद २४(१९०)
स एव मृत्युः सो३ऽमृतं सो३ऽभ्वं१ स रक्षः २५
स रुद्रो वसुवनिर्वसुदेये नमोवाके वषट्कारोऽनु संहितः २६
तस्येमे सर्वे यातव उप प्रशिषमासते २७ तस्यामू सर्वा नक्षत्रा वशे चन्द्रमसा सह २८ १२२१

चतुर्थः पर्यायः ॥ ४ ॥

२९, ३३, ३९-४०, ४५ आसुरी गायत्री; ३०, ३२, ३५-३६, ४२ प्राजापत्याऽनुष्टुप्; ३१ विराड् गायत्री; ३४ साम्नी उष्णिक्; ३७-३८ साम्नी उष्णिगनुष्टुप्; ४१ साम्नी बृहती; ४३ आर्षी गायत्री; ४४ साम्नी अनुष्टुप्।

स वा अह्नोऽजायत तस्मादहरजायत २९ स वै रात्र्या अजायत तस्माद्रात्रिरजायत ३०
स वा अन्तरिक्षादजायत तस्मादन्तरिक्षमजायत ३१ स वै वायोरजायत तस्माद्वायुरजायत ३२
स वै दिवोऽजायत तस्माद् द्यौरध्यजायत ३३ स वै दिग्भ्योऽजायत तस्माद्दिशोऽजायन्त ३४(२००)
स वै भूमेरजायत तस्माद्भूमिरजायत ३५ स वा अग्नेरजायत तस्मादग्निरजायत ३६
स वा अद्भ्योऽजायत तस्मादापोऽजायन्त ३७ स वा ऋग्भ्योऽजायत तस्मादृचोऽजायन्त ३८
स वै यज्ञादजायत तस्माद्यज्ञोऽजायत ३९ स यज्ञस्तस्य यज्ञः स यज्ञस्य शिरस्कृतम् ४०
स स्तनयति स वि द्योतते स उ अश्मानमस्यति ४१ पापाय वा भद्राय वा पुरुषायासुराय वा ४२
यद्वा कृणोष्योषधीर्यद्वा वर्षसि भद्रया यद्वा जन्यमवीवृधः ४३
तावांस्ते मघवन् महिमोपो ते तन्वः शतम् ४४ उपो ते बध्वे बद्धानि यदि वाऽसि न्यर्बुदम् ४५ १२३८

पञ्चमः पर्यायः ॥ ५ ॥

४६ आसुरी गायत्री; ४७ यवमध्या गायत्री; ४८ साम्नी उष्णिक्; ४९ निचृत्साम्नी बृहती; ५० प्राजापत्याऽनुष्टुप्; ५१ विराड्गायत्री।

भूयानिन्द्रो नमुराद्भूयानिन्द्रासि मृत्युभ्यः ४६
भूयानरात्याः शच्याः पतिस्त्वमिन्द्रासि विभूः प्रभूरिति त्वोपास्महे वयम् ४७
नमस्ते अस्तु पश्यत पश्य मा पश्यत ४८ अन्नाद्येन यशसा तेजसा ब्राह्मणवर्चसेन ४९×
अम्भो अमो महः सह इति त्वोपास्महे वयम्। नमस्ते०। अन्नाद्येन० ५०
अम्भो अरुणं रजतं रजः सह इति त्वोपास्महे वयम्। नमस्ते०। अन्नाद्येन० ५१ १२४४

षष्ठः पर्यायः ॥ ६ ॥

५२-५३ प्राजापत्याऽनुष्टुप्; ५४ द्विपदाऽऽर्षी गायत्री।

उरुः पृथुः सुभूर्भुव इति त्वोपास्महे वयम्। नमस्ते०। अन्नाद्येन० ५२
प्रथो वरो व्यचो लोक इति त्वोपास्महे वयम्। नमस्ते०। अन्नाद्येन० ५३
भवद्वसुरिदद्वसुः संयद्वसुरायद्वसुरिति त्वोपास्महे वयम् ५४(२१०)

॥६॥ (अथर्व० १५।१।१-८)

(२११-४२३) अथर्वा। अध्यात्मं, व्रात्यः। १ साम्नी पङ्क्तिः, २ द्विपदा साम्नी बृहती; ३ एकपदा यजुर्ब्राह्म्यनुष्टुप्; ४ एकपदा विराड् गायत्री; ५ साम्नी अनुष्टुप्; ६ त्रिपदा प्राजापत्या बृहती; ७ आसुरी पंक्तिः; ८ त्रिपदा अनुष्टुप्।

व्रात्य आसीदीयमान एव स प्रजापतिं समैरयत् १ १२४८

---

× अथर्व० १३।४।४८-४९ = अथर्व० १३।४।५५-५६

स प्रजापतिः सुवर्णमात्मन्नपश्यत् तत् प्राजनयत् २

तदेकमभवत् तल्ललाममभवत् तन्महदभवत् तज्ज्येष्ठमभवत् तद् ब्रह्माभवत्
तत् तपोऽभवत् तत् सत्यमभवत् तेन प्राजायत ३ १२५०

सोऽवर्धत स महानभवत् स महादेवोऽभवत् ४

स देवानामीशां पर्यैत् स ईशानोऽभवत् ५ स एकव्रात्योऽभवत्स धनुरादत्त तदेवेन्द्रधनुः ६

नीलमस्योदरं लोहितं पृष्ठम् ७

नीलेनैवाप्रियं भ्रातृव्यं प्रोर्णोति लोहितेन द्विषन्तं विध्यतीति ब्रह्मवादिनो वदन्ति ८(२२८)

॥ ७ ॥ ( अथर्व० १५।२।१-१४, १७-२२, २५-३० )*

१, ६, ९, १७, २५, ३० साम्न्यनुष्टुप्; २, १८, २६ साम्नी त्रिष्टुप्, ३ द्विपदाऽऽर्षी पङ्क्तिः; ४, २०, २८ द्विपदा ब्राह्मी गायत्री; ५, १३, २१, २९ द्विपदाऽऽर्ची गायत्री; १४ साम्नी पंक्तिः; २२ आसुरी गायत्री; ७, १५, २३, ३१ पदपङ्क्तिः; ८, १६, २४, ३२ त्रिपदा प्राजापत्या त्रिष्टुप्; १० एकपदा उष्णिक्; ११ द्विपदाऽऽर्षी भुरिक् त्रिष्टुप्। १२ आर्षी पराऽनुष्टुप्; १९ द्विपदा विराडार्षी पङ्क्तिः; २७ निचृदार्षी पङ्क्तिः।

स उदतिष्ठत् स प्राचीं दिशमनु व्यचलत् १

तं बृहच्च रथन्तरं चादित्याश्च विश्वे च देवा अनुव्यचलन् २(२३०)

बृहते च वै स रथन्तराय चादित्येभ्यश्च विश्वेभ्यश्च देवेभ्य आ वृश्चते
य एवं विद्वांसं व्रात्यमुपवदति ३

बृहतश्च वै स रथन्तरस्य चादित्यानां च विश्वेषां च देवानां
प्रियं धाम भवति तस्य प्राच्यां दिशि ४

श्रद्धा पुंश्चली मित्रो मागधो विज्ञानं वासोऽहरुष्णीषं
रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ५ १२६०

भूतं च भविष्यच्च परिष्कन्दौ मनो विपथम् ६

मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः ७(२३५)

कीर्तिश्च यशश्च पुरःसरावैनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ८

स उदतिष्ठत् स दक्षिणां दिशमनु व्यचलत् ९

तं यज्ञायज्ञियं च वामदेव्यं च यज्ञश्च यजमानश्च पशवश्चानुव्यचलन् १०

यज्ञायज्ञियाय च वै स वामदेव्याय च यज्ञाय च यजमानाय च पशुभ्यश्चा वृश्चते
य एवं विद्वांसं व्रात्यमुपवदति ११ १२६६

---

* अथर्व० १५, २, ७-८ = १५, २, १५-१६, २३-२४, ३१-३२।

यज्ञायज्ञियस्य च वै स वामदेव्यस्य च यज्ञस्य च यजमानस्य च पशूनां च
 प्रियं धाम भवति तस्य दक्षिणायां दिशि १२(२४०)
उषाः पुंश्चली मन्त्रो मागधो विज्ञानं वासोऽहरुष्णीषं रात्री केशा हरितौ० १३
अमावास्या च पौर्णमासी च परिष्कन्दौ मनो विपथम् १४
स उदतिष्ठत् स प्रतीचीं दिशमनु व्यचलत् १७ १२७०
तं वैरूपं च वैराजं चापश्च वरुणश्च राजाऽनुव्यचलन् १८
वैरूपाय च वै स वैराजाय चाद्भ्यश्च वरुणाय च राज्ञ आ वृश्चते य एवं० १९
वैरूपस्य च वै स वैराजस्य चापां च वरुणस्य च राज्ञः
 प्रियं धाम भवति तस्य प्रतीच्यां दिशि २०
इरा पुंश्चली हसो मागधो विज्ञानं वासोऽहरुष्णीषं रात्री केशा हरितौ० २१
अहश्च रात्री च परिष्कन्दौ मनो विपथम् २२
स उदतिष्ठत् स उदीचीं दिशमनु व्यचलत् २५
तं श्यैतं च नौधसं च सप्तर्षयश्च सोमश्च राजाऽनुव्यचलन् २६(२५०)
श्यैताय च वै स नौधसाय च सप्तर्षिभ्यश्च सोमाय च राज्ञ आ वृश्चते य एवं० २७
श्यैतस्य च वै स नौधसस्य च सप्तर्षीणां च सोमस्य च राज्ञः
 प्रियं धाम भवति तस्योदीच्यां दिशि २८
विद्युत् पुंश्चली स्तनयित्नुर्मागधो विज्ञानं वासोऽहरुष्णीषं रात्री केशा हरितौ० २९ १२८०
श्रुतं च विश्रुतं च परिष्कन्दौ मनो विपथम् ३०

॥८॥ ( अथर्व० १५।३।१-११ )

१ पिपीलिकमध्या गायत्री, २ साम्नी उष्णिक्, ३ याजुषी जगती; ४ द्विपदाऽऽर्च्युष्णिक्; ५ आर्ची बृहती; ६ आसुर्यनुष्टुप्; ७ साम्नी गायत्री; ८ आसुरी पंक्तिः; ९ आसुरी जगती, १० प्राजापत्या त्रिष्टुप्; ११ विराड् गायत्री ।

स संवत्सरमूर्ध्वोऽतिष्ठत् तं देवा अब्रुवन् व्रात्य किं नु तिष्ठसीति १(२५५)
सोऽब्रवीदासन्दीं मे सं भरन्त्विति २ तस्मै व्रात्यायासन्दीं समभरन् ३
तस्या ग्रीष्मश्च वसन्तश्च द्वौ पादावास्तां शरच्च वर्षाश्च द्वौ ४
बृहच्च रथंतरं चानूच्येऽआस्तां यज्ञायज्ञियं च वामदेव्यं च तिरश्च्ये ५
ऋचः प्राञ्चस्तन्तवो यजूंषि तिर्यञ्चः ६ वेद आस्तरणं ब्रह्मोपबर्हणम् ७
सामासाद उद्गीथोऽपश्रयः ८ तामासन्दीं व्रात्य आरोहत् ९ १२९०

तस्य देवजनाः परिष्कन्दा आसन्त्संकल्पाः प्रहाय्या३ विश्वानि भूतान्युपसदः १०
विश्वान्येवास्य भूतान्युपसदो भवन्ति य एवं वेद ११(२६५)

॥ ९ ॥ (अथर्व० १५।४।१-१८)

१, १३, १६ दैवी जगती; ४, ७, १० प्राजापत्या गायत्री; २, ८ आर्ची अनुष्टुप्; ३, १२ द्विपदा प्राजापत्या जगती; ५ प्राजापत्या पंक्तिः; ६ आर्ची गायत्री; ९ भौमार्ची त्रिष्टुप्; ११ साम्नी त्रिष्टुप्; १४ प्राजापत्या बृहती; १५, १८ द्विपदाऽऽर्ची पंक्तिः; १७ आर्ची उष्णिक् ।

तस्मै प्राच्या दिशः १ वासन्तौ मासौ गोप्तारावकुर्वन् बृहच्च रथंतरं चानुष्ठातारौ २
वासन्तावेनं मासौ प्राच्या दिशो गोपायतो बृहच्च रथंतरं चानु तिष्ठतो य एवं वेद ३
तस्मै दक्षिणाया दिशः ४ ग्रैष्मौ मासौ गोप्तारावकुर्वन् यज्ञायज्ञियं च वामदेव्यं चानुष्ठातारौ ५
ग्रैष्मावेनं मासौ दक्षिणाया दिशो गोपायतो यज्ञायज्ञियं च वामदेव्यं चानु तिष्ठतो० ६
तस्मै प्रतीच्या दिशः ७ वार्षिकौ मासौ गोप्तारावकुर्वन् वैरूपं च वैराजं चानुष्ठातारौ ८ १३००
वार्षिकावेनं मासौ प्रतीच्या दिशो गोपायतो वैरूपं च वैराजं चानु तिष्ठतो य एवं वेद ९
तस्मा उदीच्या दिशः १० शारदौ मासौ गोप्तारावकुर्वञ्छ्यैतं च नौधसं चानुष्ठातारौ ११
शारदावेनं मासावुदीच्या दिशो गोपायतः श्यैतं च नौधसं चानु तिष्ठतो य एवं वेद १२
तस्मै ध्रुवाया दिशः १३ हैमनौ मासौ गोप्तारावकुर्वन् भूमिं चाग्निं चानुष्ठातारौ १४
हैमनावेनं मासौ ध्रुवाया दिशो गोपायतो भूमिश्चाग्निश्चानु तिष्ठतो य एवं वेद १५(२८०)
तस्मा ऊर्ध्वाया दिशः १६ शैशिरौ मासौ गोप्तारावकुर्वन् दिवं चादित्यं चानुष्ठातारौ १७
शैशिरावेनं मासावूर्ध्वाया दिशो गोपायतो द्यौश्चादित्यश्चानु तिष्ठतो य एवं वेद १८ १३१०

॥ १० ॥ ( अथर्व० १५।६।१-२७ )

१, ४, आसुरी पंक्तिः; ७, १०, १३, १६, २५ आसुरी बृहती; २२-२३ परोष्णिक्; २, १७ आर्ची पंक्तिः; १९ आर्च्युष्णिक्; ५, ११ साम्नी त्रिष्टुप्; ८ साम्नी पङ्क्तिः, १४, २४ आर्ची त्रिष्टुप; २० साम्न्यनुष्टुप; २६ आर्च्यनुष्टुप्; ३ आर्षी पंक्तिः; ६, १२ निचृद्बृहती; ९ प्राजापत्या त्रिष्टुप्; १५, १८ विराट् जगती; २१ आर्ची बृहती; २७ विराड् बृहती ।

स ध्रुवां दिशमनु व्यचलत् १
तं भूमिश्चाग्निश्चौषधयश्च वनस्पतयश्च वानस्पत्याश्च वीरुधश्चानुव्यचलन् २(२८५)
भूमेश्च वै सो३ऽग्नेश्चौषधीनां च वनस्पतीनां च वानस्पत्यानां
च वीरुधां च प्रियं धाम भवति य एवं वेद ३
स ऊर्ध्वां दिशमनु व्यचलत् ४
तमृतं च सत्यं च सूर्यश्च चन्द्रश्च नक्षत्राणि चानुव्यचलन् ५ १३१५

* अथर्व० १५, ५, १-२१ = दै० [ रुद्रः ] १२०-४० ।

ऋतस्य च वै स सत्यस्य च सूर्यस्य च चन्द्रस्य च नक्षत्राणां च प्रियं धाम भवति० ६
स उत्तमां दिशमनु व्यचलत् ७ तमृचश्च सामानि च यजूंषि च ब्रह्म चानुव्यचलन् ८(२९१)
ऋचां च वै स साम्नां च यजुषां च ब्रह्मणश्च प्रियं धाम भवति य एवं वेद ९
स बृहतीं दिशमनु व्यचलत् १० तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्चानुव्यचलन् ११ १३२१
इतिहासस्य च वै स पुराणस्य च गाथानां च नाराशंसीनां च प्रियं धाम भवति० १२
स परमां दिशमनु व्यचलत् १३
तमाहवनीयश्च गार्हपत्यश्च दक्षिणाग्निश्च यज्ञश्च यजमानश्च पशवश्चानुव्यचलन् १४
आहवनीयस्य च वै स गार्हपत्यस्य च दक्षिणाग्नेश्च यज्ञस्य च यजमानस्य
च पशूनां च प्रियं धाम भवति य एवं वेद १५
सोऽनादिष्टां दिशमनु व्यचलत् १६
तमृतवश्चार्तवाश्च लोकाश्च लौक्याश्च मासाश्चार्धमासाश्चाहोरात्रे चानुव्यचलन् १७(३००)
ऋतूनां च वै स आर्तवानां च लोकानां च लौक्यानां च मासानां चार्धमासानां
चाहोरात्रयोश्च प्रियं धाम भवति य एवं वेद १८
सोऽनावृत्तां दिशमनु व्यचलत् ततो नावर्त्स्यन्नमन्यत १९
तं दितिश्चादितिश्चेडा चेन्द्राणी चानुव्यचलन् २० १३३०
दितेश्च वै सोऽदितेश्चेडायाश्चेन्द्राण्याश्च प्रियं धाम भवति य एवं वेद २१
स दिशोऽनु व्यचलत् २२ तं विराडनु व्यचलत् सर्वे च देवाः सर्वाश्च देवताः २३
विराजश्च वै स सर्वेषां च देवानां सर्वासां च देवतानां प्रियं धाम भवति य एवं वेद २४
स सर्वानन्तर्देशानन्नु व्यचलत् २५
तं प्रजापतिश्च परमेष्ठी च पिता च पितामहश्चानुव्यचलन् २६
प्रजापतेश्च वै स परमेष्ठिनश्च पितुश्च पितामहस्य च प्रियं धाम भवति य एवं वेद २७(३१०)

॥ ११ ॥ ( अथर्व० १५।७।१-५ )

१ त्रिपदा निचृद् गायत्री; २ एकपदा विराड् बृहती; ३ विराडुष्णिक्; ४ एकपदा गायत्री; ५ पंक्तिः।

स महिमा सद्रुर्भूत्वाऽन्तं पृथिव्या अगच्छत् स समुद्रोऽभवत् १
तं प्रजापतिश्च परमेष्ठी च पिता च पितामहश्चापश्च श्रद्धा च वर्षं भूत्वाऽनुव्यवर्तयन्त २
ऐनमापो गच्छन्त्यैनं श्रद्धा गच्छत्यैनं वर्षं गच्छति य एवं वेद ३ १३४०

तं श्रद्धा च यज्ञश्च लोकश्चान्नं चान्नाद्यं च भूत्वाऽभिपर्यावर्तन्त ४ १३४१
ऐनं श्रद्धा गच्छत्यैनं यज्ञो गच्छत्यैनं लोको गच्छत्यैनमन्नं
गच्छत्यैनमन्नाद्यं गच्छति य एवं वेद ५

॥ १२ ॥ ( अथर्व० १५।८।१-३ )

१ साम्नी उष्णिक्; २ प्राजापत्याऽनुष्टुप्; ३ आर्ची पंक्तिः ।

सोऽरज्यत ततो राजन्योऽजायत १ स विशः सबन्धूनन्नमन्नाद्यमभ्युदतिष्ठत् २
विशां च वै स सबन्धूनां चान्नस्य चान्नाद्यस्य च प्रियं धाम भवति य एवं वेद ३

॥ १३ ॥ ( अथर्व० १५।९।१-३ )

१ आसुरी जगती; २ आर्ची गायत्री; ३ आर्ची पंक्तिः ।

स विशोऽनु व्यचलत् १ तं सभा च समितिश्च सेना च सुरा चानुव्यचलन् २(३२०)
सभायाश्च वै स समितेश्च सेनायाश्च सुरायाश्च प्रियं धाम भवति य एवं वेद ३

॥ १४ ॥ ( अथर्व० १५।१०।१-११ )

१ द्विपदा साम्नी बृहती; २ त्रिपदाऽऽर्ची पंक्तिः; ३ द्विपदा प्राजापत्या पंक्तिः; ४ त्रिपदा वर्धमाना गायत्री;
५ त्रिपदा साम्नी बृहती; ६,८,१० द्विपदा आसुरी गायत्री; ७,९ साम्नी उष्णिक्,
११ आसुरी बृहती ।

तद् यस्यैवं विद्वान् व्रात्यो राज्ञोऽतिथिर्गृहानागच्छेत् १
श्रेयांसमेनमात्मनो मानयेत् तथा क्षत्राय ना वृश्चते तथा राष्ट्राय ना वृश्चते २ १३५०
अतो वै ब्रह्म च क्षत्रं चोदतिष्ठतां ते अब्रूतां कं प्र विशावेति ३
अतो वै बृहस्पतिमेव ब्रह्म प्रा विशत्विन्द्रं क्षत्रं तथा वा इति ४
अतो वै बृहस्पतिमेव ब्रह्म प्राविशदिन्द्रं क्षत्रम् ५ इयं वा उ पृथिवी बृहस्पतिर्द्यौरेवेन्द्रः ६
अयं वा उ अग्निर्ब्रह्मासावादित्यः क्षत्रम् ७ ऐनं ब्रह्म गच्छति ब्रह्मवर्चसी भवति ८
यः पृथिवीं बृहस्पतिमग्निं ब्रह्म वेद ९ ऐनमिन्द्रियं गच्छतीन्द्रियवान् भवति १०
य आदित्यं क्षत्रं दिवमिन्द्रं वेद ११(३३१)

॥ १५ ॥ ( अथर्व० १५।११।१-११ )

१ दैवी पंक्तिः; २ द्विपदा पूर्वात्रिष्टुबतिशक्वरी; ३-६,८,१० निचृदार्ची बृहती ( १० भुरिक् );
७,९ द्विपदा प्राजापत्या बृहती; ११ द्विपदाऽऽर्च्यनुष्टुप् ।

तद् यस्यैवं विद्वान् व्रात्योऽतिथिर्गृहानागच्छेत् १ १३६०
स्वयमेनमभ्युदेत्य ब्रूयाद् व्रात्य क्वाऽवात्सीर्व्रात्योदकं व्रात्य तर्पयन्तु व्रात्य यथा ते
प्रियं तथाऽस्तु व्रात्य यथा ते वशस्तथाऽस्तु व्रात्य यथा ते निकामस्तथाऽस्त्विति २

यदेनमाह व्रात्य क्वावात्सीरिति पथ एव तेन देवयानानव रुन्द्धे ३(३३५)
यदेनमाह व्रात्योदकमित्यप एव तेनाव रुन्द्धे ४
यदेनमाह व्रात्य तर्पयन्त्विति प्राणमेव तेन वर्षीयांसं कुरुते ५
यदेनमाह व्रात्य यथा ते प्रियं तथाऽस्त्विति प्रियमेव तेनाव रुन्द्धे ६
ऐनं प्रियं गच्छति प्रियः प्रियस्य भवति य एवं वेद ७
यदेनमाह व्रात्य यथा ते वशस्तथाऽस्त्विति वशमेव तेनाव रुन्द्धे ८
ऐनं वशो गच्छति वशी वशिनां भवति य एवं वेद ९
यदेनमाह व्रात्य यथा ते निकामस्तथाऽस्त्विति निकाममेव तेनाव रुन्द्धे १०
ऐनं निकामो गच्छति निकामे निकामस्य भवति य एवं वेद ११ १३७०

॥ १६ ॥ ( अथर्व० १५।१२।१-११ )

१ त्रिपदा गायत्री; २ प्राजापत्या बृहती; ३-४ भुरिक्प्राजापत्याऽनुष्टुप् ( ४ साम्नी ); ५-६,९-१० आसुरी गायत्री; ८ विराड् गायत्री; ७,११ त्रिपदा प्राजापत्या त्रिष्टुप्।

तद् यस्यैवं विद्वान् व्रात्य उद्धृतेष्वग्निष्वधिश्रितेऽग्निहोत्रेऽतिथिर्गृहानागच्छेत् १
स्वयमेनमभ्युदेत्य ब्रूयाद् व्रात्याति सृज होष्यामीति २(३४५)
स चातिसृजेज्जुहुयान्न चातिसृजेन्न जुहुयात् ३ स य एवं विदुषा व्रात्येनातिसृष्टो जुहोति ४
प्र पितृयाणं पन्थां जानाति प्र देवयानम् ५ न देवेष्वा वृश्चते हुतमस्य भवति ६
पर्यस्यास्मिँल्लोक आयतनं शिष्यते य एवं विदुषा व्रात्येनातिसृष्टो जुहोति ७
अथ य एवं विदुषा व्रात्येनाननतिसृष्टो जुहोति ८ न पितृयाणं पन्थां जानाति न देवयानम् ९
आ देवेषु वृश्चते अहुतमस्य भवति १० १३८०
नास्यास्मिँल्लोक आयतनं शिष्यते य एवं विदुषा व्रात्येनाननतिसृष्टो जुहोति ११

॥ १७ ॥ ( अथर्व० १५।१३।१-१४ )

१ साम्नी उष्णिक्; २,६ प्राजापत्याऽनुष्टुप्; ३,५,७ आसुरी गायत्री; ४,८ साम्नी बृहती; ९ द्विपदा निचृद्गायत्री; १० द्विपदा विराड् गायत्री; ११ प्राजापत्या पंक्तिः; १२ आसुरी जगती; १३ सतः पंक्तिः; १४ अक्षरपंक्तिः।

तद् यस्यैवं विद्वान् व्रात्य एकां रात्रिमतिथिर्गृहे वसति १(३५५)
ये पृथिव्यां पुण्या लोकास्तानेव तेनाव रुन्द्धे २
तद् यस्यैवं विद्वान् व्रात्यो द्वितीयां रात्रिमतिथिर्गृहे वसति ३
येऽन्तरिक्षे पुण्या लोकास्तानेव तेनाव रुन्द्धे ४
तद् यस्यैवं विद्वान् व्रात्यस्तृतीयां रात्रिमतिथिर्गृहे वसति ५ १३८६

ये दिवि पुण्या लोकास्तानेव तेनाव रुन्द्धे ६(३६०)

तद् यस्यैवं विद्वान् व्रात्यश्चतुर्थीं रात्रिमतिथिर्गृहे वसति ७

ये पुण्यानां पुण्या लोकास्तानेव तेनाव रुन्द्धे ८

तद् यस्यैवं विद्वान् व्रात्योऽपरिमिता रात्रीरतिथिर्गृहे वसति ९ १३९०

य एवापरिमिताः पुण्या लोकास्तानेव तेनाव रुन्द्धे १०

अथ यस्याव्रात्यो व्रात्यब्रुवो नामबिभ्रत्यतिथिर्गृहानागच्छेत् ११ कर्षेदेनं न चैनं कर्षेत् १२

अस्यै देवताया उदकं याचामीमां देवतां वासय इमामिमां देवतां
परि वेवेष्मीत्येनं परि वेविष्यात् १३

तस्यामेवास्य तद् देवतायां हुतं भवति य एवं वेद १४

॥ १८ ॥ ( अथर्व०.१५।१४।१-२४ )

१ त्रिपदा अनुष्टुप्; २,४,६,८,१०,१२,१४,१६,१८,२०,२२,२४ द्विपदा आसुरी गायत्री ( १२,१४,१६,
१८ भुरिक् प्राजापत्या अनुष्टुप् ); ३,९ पुर उष्णिक्; ५ अनुष्टुप्; ७ प्रस्तारपंक्तिः;
११ स्वराड् गायत्री; १३,१५ आर्ची पंक्तिः; १९ भुरिङ्नागी गायत्री;
२१ प्राजापत्या त्रिष्टुप्।

स यत् प्राचीं दिशमनु व्यचलन्मारुतं शर्धो भूत्वाऽनुव्यचलन्मनोऽन्नादं कृत्वा १

मनसाऽन्नादेनान्नमत्ति य एवं वेद २(३७०)

स यद् दक्षिणां दिशमनु व्यचलदिन्द्रो भूत्वाऽनुव्यचलद् बलमन्नादं कृत्वा ३

बलेनान्नादेनान्नमत्ति य एवं वेद ४

स यत् प्रतीचीं दिशमनु व्यचलद् वरुणो राजा भूत्वाऽनुव्यचलदपोऽन्नादीः कृत्वा ५ १४००

अद्भिरन्नादिभिरन्नमत्ति य एवं वेद ६

स यदुदीचीं दिशमनु व्यचलत् सोमो राजा भूत्वाऽनुव्यचलत्
सप्तर्षिभिर्हुत आहुतिमन्नादीं कृत्वा ७

आहुत्याऽन्नाद्यान्नमत्ति य एवं वेद ८

स यद् ध्रुवां दिशमनु व्यचलद् विष्णुर्भूत्वाऽनुव्यचलद् विराजमन्नादीं कृत्वा ९

विराजाऽन्नाद्यान्नमत्ति य एवं वेद १०

स यत् पशूननु व्यचलद् रुद्रो भूत्वाऽनुव्यचलदोषधीरन्नादीः कृत्वा ११

ओषधीभिरन्नादीभिरन्नमत्ति य एवं वेद १२(३८०)

स यत् पितॄननु व्यचलद् यमो राजा भूत्वाऽनुव्यचलत् स्वधाकारमन्नादं कृत्वा १३

स्वधाकारेणान्नादेनान्नमत्ति य एवं वेद १४

स यन्मनुष्याँ३ इनन्‌ु व्यचलदग्निर्भूत्वाऽनुव्यचलत् स्वाहाकारमन्नादं कृत्वा १५ १४१०
स्वाहाकारेणान्नादेनान्नमत्ति य एवं वेद १६
स यदूर्ध्वां दिशमनु व्यचलद् बृहस्पतिर्भूत्वाऽनुव्यचलद् वषट्कारमन्नादं कृत्वा १७
वषट्कारेणान्नादेनान्नमत्ति य एवं वेद १८
स यद् देवाननु व्यचलदीशानो भूत्वाऽनुव्यचलन्मन्युमन्नादं कृत्वा १९
मन्युनाऽन्नादेनान्नमत्ति य एवं वेद २०
स यत् प्रजा अनु व्यचलत् प्रजापतिर्भूत्वाऽनुव्यचलत् प्राणमन्नादं कृत्वा २१
प्राणेनान्नादेनान्नमत्ति य एवं वेद २२(३९०)
स यत् सर्वानन्तर्देशाननु व्यचलत् परमेष्ठी भूत्वाऽनुव्यचलद् ब्रह्मान्नादं कृत्वा २३
ब्रह्मणाऽन्नादेनान्नमत्ति य एवं वेद २४

॥१९॥ ( अथर्व० १५।१५।१-९ )

१ दैवी पंक्तिः; २ आसुरी बृहती; ३-४, ७-८ प्राजापत्याऽनुष्टुप् ( ४, ७-८ भुरिक् );
५-६ द्विपदा साम्नी बृहती, ९ विराड् गायत्री।

तस्य व्रात्यस्य १ सप्त प्राणाः सप्तापानाः सप्त व्यानाः २ १४२०
तस्य व्रात्यस्य। योऽस्य प्रथमः प्राण ऊर्ध्वो नामायं सो अग्निः ३
तस्य व्रात्यस्य। योऽस्य द्वितीयः प्राणः प्रौढो नामासौ स आदित्यः ४
तस्य व्रात्यस्य। योऽस्य तृतीयः प्राणो३ऽभ्यूढो नामासौ स चन्द्रमाः ५
तस्य व्रात्यस्य। योऽस्य चतुर्थः प्राणो विभूर्नामायं स पवमानः ६
तस्य व्रात्यस्य। योऽस्य पञ्चमः प्राणो योनिर्नाम ता इमा आपः ७
तस्य व्रात्यस्य। योऽस्य षष्ठः प्राण प्रियो नाम त इमे पशवः ८(४००)
तस्य व्रात्यस्य। योऽस्य सप्तमः प्राणोऽपरिमितो नाम ता इमाः प्रजाः ९

॥२०॥ ( अथर्व० १५।१६।१-७ )

१, ३ साम्नी उष्णिक्; २, ४-५ प्राजापत्या उष्णिक्; ६ याजुषी त्रिष्टुप्; ७ आसुरी गायत्री।

तस्य व्रात्यस्य। योऽस्य प्रथमोऽपानः सा पौर्णमासी १
तस्य व्रात्यस्य। योऽस्य द्वितीयोऽपानः साऽष्टका २ १४३०
तस्य व्रात्यस्य। योऽस्य तृतीयोऽपानः साऽमावास्या ३
तस्य व्रात्यस्य। योऽस्य चतुर्थोऽपानः सा श्रद्धा ४(४०५)
तस्य व्रात्यस्य। योऽस्य पञ्चमोऽपानः सा दीक्षा ५

तस्य व्रात्यस्य । योऽस्य षष्ठोऽपानः स यज्ञः ६
तस्य व्रात्यस्य । योऽस्य सप्तमोऽपानस्ता इमा दक्षिणाः ७ १४३५

॥ २१ ॥ ( अथर्व० १५।१७।१-१० )

१, ५ प्राजापत्या उष्णिक्; २, ७ आसुरी अनुष्टुप्; ३ याजुषी पंक्तिः; ४ साम्नी उष्णिक्; ६ याजुषी त्रिष्टुप्; ८ त्रिपदा प्रतिष्ठाऽऽर्ची पंक्तिः; ९ द्विपदा साम्नी त्रिष्टुप्; १० साम्नी अनुष्टुप् ।

तस्य व्रात्यस्य । योऽस्य प्रथमो व्यानः सेयं भूमिः १
तस्य व्रात्यस्य । योऽस्य द्वितीयो व्यानस्तदन्तरिक्षम् २(४१०)
तस्य व्रात्यस्य । योऽस्य तृतीयो व्यानः सा द्यौः ३
तस्य व्रात्यस्य । योऽस्य चतुर्थो व्यानस्तानि नक्षत्राणि ४
तस्य व्रात्यस्य । योऽस्य पञ्चमो व्यानस्त ऋतवः ५
तस्य व्रात्यस्य । योऽस्य षष्ठो व्यानस्त आर्तवाः ६
तस्य व्रात्यस्य । योऽस्य सप्तमो व्यानः स संवत्सरः ७
तस्य व्रात्यस्य । समानमर्थं परि यन्ति देवाः संवत्सरं वा एतदृतवोऽनुपरियन्ति व्रात्यं च ८
तस्य व्रात्यस्य । यदादित्यमभिसंविशन्त्यमावास्यां चैव तत् पौर्णमासीं च ९
तस्य व्रात्यस्य । एकं तदेषाममृतत्वमित्याहुतिरेव १० १४४५

॥२२॥ ( अथर्व० १५।१८।१-५ )

१ दैवी पंक्तिः; २-३ आर्ची बृहती; ४ आर्ची अनुष्टुप्; ५ साम्नी उष्णिक् ।

तस्य व्रात्यस्य १ यदस्य दक्षिणमक्ष्यसौ स आदित्यो यदस्य सव्यमक्ष्यसौ स चन्द्रमाः २
योऽस्य दक्षिणः कर्णोऽयं सो अग्निर्योऽस्य सव्यः कर्णोऽयं स पवमानः ३
अहोरात्रे नासिके दितिश्चादितिश्च शीर्षकपाले संवत्सरः शिरः ४
अह्ना प्रत्यङ् व्रात्यो रात्र्या प्राङ् नमो व्रात्याय ५(४१३)

---

# २४ कः [प्रजापतिः] ।

॥ १ ॥ ( ऋ० १।२४।१ )

शुनःशेप आजीगर्तिः कृत्रिमो देवरातो वैश्वामित्रो वा । त्रिष्टुप् ।

कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम ।
को नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च १ १४५१

॥ २ ॥ ( ऋ० १०।१८।१४ )
संकुसुको यामायनः। अनुष्टुप्।

प्रतीचीने मामहनी—ष्वाः पर्णमिवा दधुः। प्रतीचीं जग्रभा वाच—मश्वं रशनया यथा १४ १४५९

॥ ३ ॥ ( ऋ० १०।१२१।१-१० )+
( ३-१२ ) हिरण्यगर्भः प्राजापत्यः। त्रिष्टुप्।

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम १
य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः।
यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम २
यः प्राणतो निमिषतो महित्वै—क इद्राजा जगतो बभूव।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ३(५)
यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ४
येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ५
यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने।
यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ६
आपो ह यद्बृहतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम्।
ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम ७
यश्चिदापो महिना पर्यपश्यद् दक्षं दधाना जनयन्तीर्यज्ञम्।
यो देवेष्वधि देव एक आसीत् कस्मै देवाय हविषा विधेम ८(१०)१४६०
मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान।
यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ९
प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् १०

॥ ४ ॥ [१३-४१] ( वा० य० १।६ )

कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति। कर्मणे वां वेषाय वाम् ६

+ ऋ. १०।१२१।१-१० = वा. य. १२, १०२; १३, ४; २३, ६५; २५, १०-१३; २७, २५-२६; अथर्व. ४, २, १-३, ५, ७; ७,८०, ३।

॥ ५ ॥ ( वा० य० २।२३ )

कस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति ।
पोषाय रक्षसां भागोऽसि २३ १४६४

॥ ६ ॥ ( वा० य० ७।२९ )

कोऽसि कतमोऽसि कस्यासि को नामासि। यस्य ते नामामन्महि यं त्वा सोमेनातीतृपाम २९(१५)

॥ ७ ॥ ( वा० य० ८।१०,३६ )*

प्रजापतिर्वृषाऽसि रेतोधा रेतो मयि धेहि प्रजापतेस्ते वृष्णो रेतोधसो रेतोधामशीय १०
यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा ।
प्रजापतिः प्रजया सꣳरराणस्त्रीणि ज्योतीꣳषि सचते स षोडशी ३६

॥ ८ ॥ ( वा० य० ९।१९,२१,२३-२५ )

आ मा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे ।
आ मा गन्तां पितरा मातरा चा मा सोमो अमृतत्वेन गम्यात् १९
प्रजापतेः प्रजा अभूम २१
वाजस्येमं प्रसवः सुषुवेऽग्रे सोमꣳ राजानमोषधीष्वप्सु ।
ता अस्मभ्यं मधुमतीर्भवन्तु वयꣳ राष्ट्रे जागृयाम पुरोहिताः स्वाहा २३(२०)१४७०
वाजस्येमां प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट् ।
अदित्सन्तं दापयति प्रजानन्त्स नो रयिꣳ सर्ववीरं नि यच्छतु स्वाहा २४
वाजस्य नु प्रसव आ बभूवेमा च विश्वा भुवनानि सर्वतः ।
सनेमि राजा परि याति विद्वान् प्रजां पुष्टिं वर्धयमानो अस्मे स्वाहा २५

॥ ९ ॥ ( वा० य० १०।१० )×

अवेष्टा दन्दशूकाः प्राचीमा रोह गायत्री त्वाऽवतु
रथन्तरꣳ साम त्रिवृत्सोमो वसन्त ऋतुर्ब्रह्म द्रविणम् १०

॥ १० ॥ ( वा० य० ११।६६ )

प्रजापतये मनवे स्वाहा ६६

॥ ११ ॥ ( वा० य० १२।६१ )

मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योनावभारुखा ।
तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा वि मुञ्चतु ६१(१५)

---

* वा० य० ८।३७ = दै. [ अदितिः ] ६९५।
× वा. यं. १०।१० = ऋ. १०, १२१, १०।

॥ १२ ॥ ( वा० य० १३।१७, २४, ५४-५८ )

प्रजापतिष्ट्वा सादयत्वपां पृष्ठे समुद्रस्येमन् । व्यचस्वतीं प्रथस्वतीं प्रथस्व पृथिव्यसि १७
प्रजापतिष्ट्वा सादयतु पृष्ठे पृथिव्या ज्योतिष्मतीम् २४
प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यः ५४
प्रजापतिगृहीतया त्वया मनो गृह्णामि प्रजाभ्यः ५५
प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यः ५६(३०)१४८०
प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्यः ५७
प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः ५८

॥ १३ ॥ ( वा० य० १८।२८-२९, ४३-४४ )

प्रजापतये स्वाहा २८ प्रजापतेः प्रजा अभूम वेट् स्वाहा २९
प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्य ऋक्सामान्यप्सरस एष्टयो नाम ।
स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ४३(३५)
स नो भुवनस्य पते प्रजापते यस्य त उपरि गृहा यस्य वेह ।
अस्मै ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ स्वाहा ४४

॥ १४ ॥ ( वा० य० २०।४)

कोऽसि कतमोऽसि कस्मै त्वा काय त्वा । सुश्लोक सुमङ्गल सत्यराजन् ४

॥ १५ ॥ ( वा० य० २३।२, ४; ६४ )

उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि । प्रजापतये स्वाहा देवेभ्यः २
होता यक्षत् प्रजापतिꣳ सोमस्य महिम्नः । जुषतां पिबतु सोमꣳ होतर्यज ६४

॥ १६ ॥ ( वा० य० ३१।१९ )

प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा वि जायते ।
तस्य योनिं परि पश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वा १०(४०)१४९०

॥ १७ ॥ ( वा० य० ३५।६ )

प्रजापतौ त्वा देवतायामुपोदके लोके नि दधाम्यसौ । अप नः शोशुचदघम् ६

॥ १८ ॥ ( अथर्व० ३।१०।१३ )
( ४२-४३ ) अथर्वा । अनुष्टुप् ।

इन्द्रपुत्रे सोमपुत्रे दुहिताऽसि प्रजापतेः । कामानस्माकं पूरय प्रति गृह्णाहि नो हविः १३

॥ १९ ॥ ( अथर्व० ९।१।२४ ) त्र्यवसाना षट्पदाऽष्टिः ।

यद्वीध्रे स्तनयति प्रजापतिरेव तत् प्रजाभ्यः प्रादुर्भवति ।
तस्मात् प्राचीनोपवीतस्तिष्ठे प्रजापतेऽनु मा बुध्यस्वेति ।
अन्वेनं प्रजा अनु प्रजापतिर्बुध्यते य एवं वेद २४ १४९३

॥ २० ॥ ( अथर्व० ७।१९।१ )
( ४४ ) ब्रह्मा । जगती ।

प्रजापतिर्जनयति प्रजा इमा धाता दधातु सुमनस्यमानः ।
संजानानाः संमनसः सयोनयो मयि पुष्टं पुष्टपतिर्दधातु १

॥ २१ ॥ ( अथर्व० १६।९।१ )
( ४५ ) यमः । प्राजापत्या आर्च्यनुष्टुप् ।

जितमस्माकमुद्भिन्नमस्माकमभ्यष्ठां विश्वाः पृतना अरातीः १(४५)

॥ २२ ॥ ( सा० ६०२ )
( ४६ ) वामदेवो गौतमः । अनुष्टुप् ।

मयि वर्चो अथो यशोऽथो यज्ञस्य यत्पयः ।
परमेष्ठी प्रजापतिर्दिवि द्यामिव दृंहतु १

प्रजापति-सहचारी देवगणः ।

## (१) प्रजापतिः हरिश्चन्द्रः चर्म सोमो वा ।

॥ २३ ॥ ( ऋ० ९।२८।९ )
शुनःशेप आजीगर्तिः । गायत्री ।

उच्छिष्टं चम्वोर्भर सोमं पवित्र आ सृज । नि धेहि गोरधि त्वचि ९

## (२) प्रजापत्यादयः ।

॥ २४ ॥ ( वा० य० ३९।५ )

प्रजापतिः सम्भ्रियमाणः सम्राट् सम्भृतो वैश्वदेवः संसन्नो घर्मः प्रवृक्त—
स्तेज उद्यत आश्विनः पयस्यानीयमाने पौष्णो विष्यन्दमाने मारुतः क्लथन् ।
मैत्रः शरसि सन्ताय्यमाने वायव्यो ह्रियमाण आग्नेयो हूयमानो वाग्घुतः ५

## ( ३ ) वनस्पतिः, प्रजापतिः ।

॥ २५ ॥ ( अथर्व० ३।२४।१-७ )
( ४९-५५ ) भृगुः । अनुष्टुप्, २ निचृत्पथ्यापङ्क्तिः ।

पयस्वतीरोषधयः पयस्वन्मामकं वचः । अथो पयस्वतीनामा भरेऽहं सहस्रशः १ १४९९

वेदाहं पयस्वन्तं चकार धान्यं॑ बहु ।
संभृत्वा नाम यो देवस्तं वयं हवामहे यो यो-अयज्वनो गृहे २ १५००
इमा याः पञ्च प्रदिशो मानवीः पञ्च कृष्टयः । वृष्टे शापं नदीरिवेह स्फातिं समावहान् ३
उदुत्सं शतधारं सहस्रधारमक्षितम् । एवास्माकेदं धान्यं॑ सहस्रधारमक्षितम् ४
शतहस्त समाहर सहस्रहस्त सं किर । कृतस्य कार्य॑स्य चेह स्फातिं समावह ५
तिस्रो मात्रा गन्धर्वाणां चतस्रो गृहपत्न्याः ।
तासां या स्फातिमत्तमा तया त्वाऽभि मृशामसि ६
उपोहश्च समूहश्च क्षत्तारौ ते प्रजापते । ताविहा वहतां स्फातिं बहुं भूमानमक्षितम् ७(५५)

---

# २५ जीवः ।

॥ १ ॥ ( ऋ० १०।६०।७-११ )

( १-५ ) बन्धुः श्रुतबन्धुर्विप्रबन्धुर्गौपायनः । अनुष्टुप्, ८-९ पंक्तिः ।

अयं माताऽयं पिता ऽयं जीवातुराऽगमत् । इदं तव प्रसर्पणं सुबन्धवेहि निरिहि ७
यथा युगं वरत्रया नह्यन्ति धरुणाय कम् ।
एवा दाधार ते मनो जीवातवे न मृत्यवे ऽथो अरिष्टतातये ८
यथेयं पृथिवी मही दाधारेमान् वनस्पतीन् । एवा दाधार ते मनो जीवातवे न० ९
यमादहं वैवस्वतात् सुबन्धोर्मन आऽभरम् । जीवातवे न मृत्यवे ऽथो अरिष्टतातये १०
न्य१ग्वातोऽव वाति न्यक् तपति सूर्यः । नीचीनमघ्न्या दुहे न्यग्भवतु ते रपः ११(५)

॥ २ ॥ ( वा० य० १८।६ )

जीवातुश्च मे दीर्घायुत्वं च मे ६

॥ ३ ॥ ( वा० य० १९।४६ )

ये समानाः समनसो जीवा जीवेषु मामकाः ।
तेषा॑ᳪ श्रीर्मयि कल्पतामस्मिँल्लोके शत॑ᳪ समाः ४६ १५१२

---

# २६ वाक्।

॥ १ ॥ ( ऋ० १।१६४।४२,४५ )

दीर्घतमा औचथ्यः । ४२ आद्यर्धर्चस्य वाक्, द्वितीयस्य आपः; ४५ वाक्।
४२ प्रस्तारपंक्तिः, ४५ त्रिष्टुप्।

तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः ।
ततः क्षरत्यक्षरं तद् विश्वमुप जीवति ४२
चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ४५(२)

॥ २ ॥ ( ऋ० ३।५३।१५-१६ )

( ३-४ ) विश्वामित्रो गाथिनः । ( ससर्परी ) । त्रिष्टुप्, १६ गायत्री ।

ससर्परीरमतिं बाधमाना बृहन्मिमाय जमदग्निदत्ता ।
आ सूर्यस्य दुहिता ततान श्रवो देवेष्वमृतमजुर्यम् १५ १५१५
ससर्परीरभरत् तूयमेभ्यो ऽधि श्रवः पाञ्चजन्यासु कृष्टिषु ।
सा पक्ष्या३ नव्यमायुर्दधाना यां मे पलस्तिजमदग्नयो ददुः १६

॥ ३ ॥ ( ऋ० ८।१००।१०-११ )

( ५-६ ) नेमो भार्गवः । त्रिष्टुप्।

यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा ।
चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम १०(५)
देवीं वाचमजनयन्त देवा—स्तां विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ११

॥ ४ ॥ ( अथर्व० ७।१०५।१ )

( ७ ) अथर्वा । ( दैव्यं वचः ) । अनुष्टुप् ।

अपक्रामन् पौरुषेयाद्वृणानो दैव्यं वचः । प्रणीतीरभ्यावर्तस्व विश्वेभिः सखिभिः सह १

॥ ५ ॥ [ ८-२४ ] ( वा० य० १।१५-१६ )

अग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामि बृहद्ग्रावाऽसि वानस्पत्यः
स इदं देवेभ्यो हविः शमीष्व सुशमि शमीष्व । हविष्कृदेहि हविष्कृदेहि १५ १५२०

कुकुटोऽसि मधुजिह्व इषमूर्जमावद त्वया वयꣳ संघातꣳ संघातं जेष्म वर्षवृद्धमसि
प्रति त्वा वर्षवृद्धं वेत्तु परापूतꣳ रक्षः परापूता अरातयो ऽपहतꣳ रक्षो
वायुर्वो विविनक्तु देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना १६ १५२१

॥ ६ ॥ ( वा० य० ४।४, १७, १९-२१, २३ )

वाक्पतिर्मा पुनातु ४(१०)
एषा ते शुक्र तनूरेतद्वर्चस्तया सम्भव भ्राजं गच्छ । जूरसि धृता मनसा जुष्टा विष्णवे १७
चिदसि मनासि धीरसि दक्षिणासि क्षत्रियासि यज्ञियास्यदितिरस्युभयतःशीर्ष्णी ।
सा नः सुप्राची सुप्रतीच्येधि मित्रस्त्वा पदि बध्नीतां पूषाऽध्वनस्पात्विन्द्रायाध्यक्षाय १९
अनु त्वा माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्यः ।
सा देवि देवमच्छेहीन्द्राय सोमꣳ रुद्रस्त्वा वर्त्तयतु स्वस्ति सोमसखा पुनरेहि २०
वस्व्यस्यदितिरस्यादित्यासि रुद्रासि चन्द्रासि ।
बृहस्पतिष्ट्वा सुम्ने रम्णातु रुद्रो वसुभिरा चके २१
समख्ये देव्या धिया सं दक्षिणयोरुचक्षसा ।
मा म आयुः प्रमोषीर्मो अहं तव वीरं विदेय तव देवि सन्दृशि २३(१५)

॥ ७ ॥ ( वा० य० ५।३३ )

वागस्यैन्द्रमसि सदोऽसि ३३

॥ ८ ॥ ( वा० य० ६।११, १४-१५ )

रेवति यजमाने प्रियं धा आ विश ।
उरोरन्तरिक्षात् सजूर्देवेन वातेनास्य हविषस्त्मना यज समस्य तन्वा भव ११
वाचं ते शुन्धामि १४ वाक् त आ प्यायताम् १५ १५३१

॥ ९ ॥ ( वा० य० ८।३७ )

वाग्देवी जुषाणा सोमस्य तृप्यतु सह प्राणेन स्वाहा ३७(२०)

॥ १० ॥ ( वा० य० ९।२९ )

प्र नो यच्छत्वर्यमा प्र पूषा प्र बृहस्पतिः । प्र वाग्देवी ददातु नः स्वाहा २९

॥ ११ ॥ ( वा० य० १८।२९ )

वाग्यज्ञेन कल्पताम् २९

॥ १२ ॥ ( वा० य० २२।३३ )

वाग्यज्ञेन कल्पताꣳ स्वाहा ३३ १५३५

॥ १३ ॥ ( वा० य० ३७।१६ )

धर्ता दिवो वि भाति तपसस्पृथिव्यां धर्ता देवो देवानाममर्त्यस्तपोजाः ।
वाचमस्मे नि यच्छ देवायुवम् १६

॥ १४ ॥ ( अथर्व० ७।४३।१ )

( २५ ) प्रस्कण्वः । त्रिष्टुप् ।

शिवास्त एका अशिवास्त एकाः सर्वा बिभर्षि सुमनस्यमानः ।
तिस्रो वाचो निहिता अन्तरस्मिन् तासामेका वि पपातानु घोषम् १(२५)१५३७

# २७ श्रद्धा ।

॥ १ ॥ (ऋ० ९।१।६ )×

( १ ) मधुच्छन्दा वैश्वामित्रः । ( सूर्यस्य दुहिता श्रद्धादेवी –सायणः ) गायत्री ।

पुनाति ते परिस्रुतं सोमं सूर्यस्य दुहिता । वारेण शश्वता तना ६

॥ २ ॥ ( ऋ० १०।१५१।१-५ )

( २-६ ) श्रद्धा कामायनी । अनुष्टुप् ।

श्रद्धयाऽग्निः समिध्यते श्रद्धया हूयते हविः । श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि १
प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः । प्रियं भोजेषु यज्वस्विदं म उदितं कृधि २
यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे । एवं भोजेषु यज्वस्वस्माकमुदितं कृधि ३
श्रद्धां देवा यजमाना वायुगोपा उपासते । श्रद्धां हृदय्य१याकूत्या श्रद्धया विन्दते वसु ४
श्रद्धां प्रातर्हवामहे श्रद्धां मध्यंदिनं परि । श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः ५(६)१५४३

# २८ ज्ञानम् ।

॥ १ ॥ (ऋ० १।१६४।३७)

दीर्घतमा औचथ्यः । ( आत्मज्ञानम् ) । त्रिष्टुप् ।

न वि जानामि यदिवेदमस्मि निण्यः संनद्धो मनसा चरामि ।
यदा माऽगन् प्रथमजा ऋतस्यादिद् वाचो अश्नुवे भागमस्याः ३७

× दै० [ सोमः ] ६ ।

॥ २ ॥ ( ऋ० १०।७१।१-११ )

( २-१२ ) बृहस्पतिराङ्गिरसः । त्रिष्टुप्, ९ जगती ।

बृहस्पते प्रथमं वाचो अग्रं यत् प्रैरत नामधेयं दधानाः ।
यदेषां श्रेष्ठं यदरिप्रमासीत् प्रेणा तदेषां निहितं गुहाऽऽविः ॥ १ ॥ १५४५

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताऽधि वाचि ॥ २ ॥

यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टाम् ।
तामाभृत्या व्यदधुः पुरुत्रा तां सप्त रेभा अभि सं नवन्ते ॥ ३ ॥

उत त्वः पश्यन् न ददर्श वाच—मुत त्वः शृण्वन् न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं१ वि सस्रे जायेव पत्य उशती सुवासाः ॥ ४(५) ॥

उत त्वं सख्ये स्थिरपीतमाहु—र्नैनं हिन्वन्त्यपि वाजिनेषु ।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ॥ ५ ॥

यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति ।
यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम् ॥ ६ ॥ १५५०

अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ।
आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे ॥ ७ ॥

हृदा तष्टेषु मनसो जवेषु यद्ब्राह्मणाः संयजन्ते सखायः ।
अत्राह त्वं वि जहुर्वेद्याभि—रोहब्रह्माणो वि चरन्त्यु त्वे ॥ ८ ॥

इमे ये नार्वाङ्न परश्चरन्ति न ब्राह्मणासो न सुतेकरासः ।
त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः ॥ ९(१०) ॥

सर्वे नन्दन्ति यशसाऽऽगतेन सभासाहेन सख्या सखायः ।
किल्बिषस्पृत् पितुषणिर्ह्येषा—मरं हितो भवति वाजिनाय ॥ १० ॥

ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु ।
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः ॥ ११ ॥ १५५५

---

# २९ संज्ञानम् ।

॥ १ ॥ ( ऋ० १०।१९१।२-४ )×

( १-३ ) संवनन आङ्गिरसः । अनुष्टुप्, ३ त्रिष्टुप् ।

सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते २
समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि ३
समानी व आकूतिः समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहासति ४

॥ २ ॥ [ ४-६ ] ( वा० य० १२।४६ )

संज्ञानमसि कामधरणं मयि ते कामधरणं भूयात् ४६

॥ ३ ॥ ( वा० य० २६।१ )

सप्त सꣳसदो अष्टमी भूतसाधनी सकामाँ२ऽ अध्वनस्कुरु संज्ञानमस्तु मेऽमुना १(५)१५६०

॥ ४ ॥ ( वा० य० ३०।९ )

संज्ञानाय स्मरकारीम् ९

॥ ५ ॥ ( अथर्व० ३।३०।१-७ )

(७-१५) अथर्वा । चन्द्रमाः, सांमनस्यम् । अनुष्टुप् ; ५ विराड् जगती; ६ प्रस्तारपंक्तिः; ७ त्रिष्टुप् ।

सहृदयं सांमनस्यमविद्वेषं कृणोमि वः । अन्यो अन्यमभि हर्यत वत्सं जातमिवाघ्न्या १
अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः । जाया पत्ये मधुमतीं वाचं वदतु शन्तिवाम् २
मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा ।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ३
येन देवा न वियन्ति नो च विद्विषते मिथः । तत् कृण्मो ब्रह्म वो गृहे संज्ञानं पुरुषेभ्यः ४(१०)
ज्यायस्वन्तश्चित्तिनो मा वि यौष्ट संराधयन्तः सधुराश्चरन्तः ।
अन्यो अन्यस्मै वल्गु वदन्त एत सध्रीचीनान् वः संमनसस्कृणोमि ५
समानी प्रपा सह वोऽन्नभागः समाने योक्त्रे सह वो युनज्मि ।
सम्यञ्चोऽग्निं सपर्यतारा नाभिमिवाभितः ६
सध्रीचीनान् वः संमनसस्कृणोम्येकश्नुष्टीन्त्संवननेन सर्वान् ।
देवा इवामृतं रक्षमाणाः सायंप्रातः सौमनसो वो अस्तु ७ १५६८

---

× अथर्व. ६।६४।१-३ ।

॥ ६ ॥ ( अथर्व० ७।५२।१-२ )×

( सांमनस्यं, अश्विनौ )। १ ककुम्मत्यनुष्टुप्, २ जगती।

संज्ञानं नः स्वेभिः संज्ञानमरणेभिः । संज्ञानमश्विना युवमिहास्मासु नि यच्छतम् १

सं जानामहै मनसा सं चिकित्वा मा युष्महि मनसा दैव्येन ।

मा घोषा उत्स्थुर्बहुले विनिर्हते मेषुः पप्तदिन्द्रस्याहन्यागते २ १५७०

॥ ७ ॥ ( अथर्व० ६।९४।१-३ )

(१६-१८) अथर्वाङ्गिराः । सरस्वती ( सांमनस्यम् )। अनुष्टुप्; २ विराड् जगती।

सं वो मनांसि सं व्रता समाकूतीर्नमामसि । अमी ये विव्रता स्थन तान्वः सं नमयामसि १

अहं गृभ्णामि मनसा मनांसि मम चित्तमनु चित्तेभिरेत ।

मम वशेषु हृदयानि वः कृणोमि मम यातमनुवर्त्मान एत २

ओते मे द्यावापृथिवी ओता देवी सरस्वती । ओतौ म इन्द्रश्चाग्निश्चर्ध्यास्मेदं सरस्वति ३(१८)

---

# ३० मनः ।

॥ १ ॥ [ १-९ ] ( वा० य० ३।५३-५५ )

मनो न्वाह्वामहे नाराशंसेन स्तोमेन । पितॄणां च मन्मभिः ५३

आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे ५४ १५७५

पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातं सचेमहि ५५

॥ २ ॥ ( वा० य० ३४।१-६ )

यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ।

दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु १

येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।

यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु २(५)

यत् प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ।

यस्मान्न ऋते किं चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ३

येनेदं भूतं भुवनं भविष्यत् परिगृहीतममृतेन सर्वम् ।

येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ४ १५८०

---

× दै. [ अश्विनौ ] ६७७-७८ ।

अथर्व. ६।९४।१-२= अथर्व. ३।८।५-६ ।

*

यस्मिन्नृचः साम यजूंषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ५ १५८१
सुषारथिरश्वानिव यन्मनुष्यान् नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसङ्कल्पमस्तु ६

॥ ३ ॥ ( अथर्व० २।३०।१ )
( १० ) प्रजापतिः । पथ्यापंक्तिः ।

यथेदं भूम्या अधि तृणं वातो मथायति ।
एवा मथ्नामि ते मनो यथा मां कामिन्यसो यथा मन्नापगा असः १(१०)

॥४॥ ( अथर्व० ७।१२।४ )
( ११ ) शौनकः । अनुष्टुप् ।

यद्वो मनः परागतं यद्बद्धमिह वेह वा । तद्व आ वर्तयामसि मयि वो रमतां मनः ४

॥ ५ ॥ ( अथर्व० ७।३६।१ )
( १२ ) अथर्वा । अक्षि, मनः । अनुष्टुप् ।

अक्ष्यौ नौ मधुसंकाशे अनीकं नौ समञ्जनम् ।
अन्तः कृणुष्व मां हृदि मन इन्नौ सहासति १(१२)१५८५



# ३१ मन आवर्तनम् ।

॥ १ ॥ ( ऋ० १०।५८।१-१२ )
( १-१२ ) बन्धुः श्रुतबन्धुर्विप्रबन्धुर्गौपायनाः । अनुष्टुप् ।

यत् ते यमं वैवस्वतं मनो जगाम दूरकम् । तत् त आ वर्तयामसीह क्षयाय जीवसे १
यत् ते दिवं यत् पृथिवीं मनो जगाम दूरकम् । तत् त आ वर्तयामसीह क्षयाय जीवसे २
यत् ते भूमिं चतुर्भृष्टिं मनो जगाम दूरकम् । तत् त आ वर्तयामसीह क्षयाय जीवसे ३
यत् ते चतस्रः प्रदिशो मनो जगाम दूरकम् । तत् त आ वर्तयामसीह क्षयाय जीवसे ४
यत् ते समुद्रमर्णवं मनो जगाम दूरकम् । तत् त आ वर्तयामसीह क्षयाय जीवसे ५
यत् ते मरीचीः प्रवतो मनो जगाम दूरकम् । तत् त आ वर्तयामसीह क्षयाय जीवसे ६
यत् ते अपो यदोषधीर्मनो जगाम दूरकम् । तत् त आ वर्तयामसीह क्षयाय जीवसे ७
यत् ते सूर्यं यदुषसं मनो जगाम दूरकम् । तत् त आ वर्तयामसीह क्षयाय जीवसे ८ १५९३

यत् ते पर्वतान् बृहतो मनो जगाम दूरकम् । तत् त आ वर्तयामसीह क्षयाय जीवसे ९
यत् ते विश्वमिदं जगन्मनो जगाम दूरकम् । तत् त आ वर्तयामसीह क्षयाय जीवसे १०
यत् ते पराः परावतो मनो जगाम दूरकम् । तत् त आ वर्तयामसीह क्षयाय जीवसे ११
यत् ते भूतं च भव्यं च मनो जगाम दूरकम् । तत् त आ वर्तयामसीह क्षयाय जीवसे १२ १५९७

# ३२ असुनीतिः ।

॥ १ ॥ ( ऋ० १०।५९।५-६ )

( १-२ ) बन्धुःश्रुतबन्धुर्विप्रबन्धुर्गौपायनाः । त्रिष्टुप् ।

असुनीते मनो अस्मासु धारय जीवातवे सु प्र तिरा न आयुः ।
रारन्धि नः सूर्यस्य संदृशि घृतेन त्वं तन्वं वर्धयस्व ५
असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम् ।
ज्योक् पश्येम सूर्यमुच्चरन्तमनुमते मृळया नः स्वस्ति ६

॥ २ ॥ ( वा० य० १९।६० )

ये अग्निष्वात्ता ये अनग्निष्वात्ता मध्ये दिवः स्वधया मादयन्ते ।
तेभ्यः स्वराडसुनीतिमेतां यथावशं तन्वं कल्पयाति ६० १६००

॥ ३ ॥ ( अथर्व० १८।१।३१ )

( ४-६ ) अथर्वा । त्रिष्टुप् ।

अर्चामि वां वर्धायापो घृतस्नू द्यावाभूमी शृणुतं रोदसी मे ।
अहा यद्देवा असुनीतिमायन् मध्वा नो अत्र पितरा शिशीताम् ३१

॥ ४ ॥ ( अथर्व० १८।२।५ )

( जातवेदाः ) । भुरिक् ।

यदा शृतं कृणवो जातवेदोऽथेममेनं परि दत्तात् पितृभ्यः ।
यदो गच्छात्यसुनीतिमेतामथ देवानां वशनीर्भवाति ५(५)

॥ ५ ॥ ( अथर्व० १८।३।५९ ) त्रिष्टुप् ।

ये नः पितुः पितरो ये पितामहा य आविविशुरुर्वन्तरिक्षम् ।
तेभ्यः स्वराडसुनीतिर्नो अद्य यथावशं तन्वः कल्पयाति ५९ १६०३

# ३३ हस्तः ।

॥ १ ॥ ( ऋ० १०।६०।१२ )+

( १ ) बन्धुःश्रुतबन्धुर्विप्रबन्धुर्गौपायनाः । अनुष्टुप् ।

अयं मे हस्तो भगवा नयं मे भगवत्तरः । अयं मे विश्वभेषजो ऽयं शिवाभिमर्शनः १२

॥ २ ॥ ( अथर्व० ४।१३।७ )

( २ ) शन्तातिः । अनुष्टुप् ।

हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी ।
अनामयित्नुभ्यां हस्ताभ्यां ताभ्यां त्वाऽभि मृशामसि ७(२)१६०५

---

# ३४ मन्युः ।

॥ १ ॥ ( ऋ० १०।८३।१७ )॥

(१-१४) मन्युस्तापसः । त्रिष्टुप् ; १ जगती ।

यस्ते मन्योऽविधद्वज्र सायक सह ओजः पुष्यति विश्वमानुषक् ।
साह्याम दासमार्यं त्वया युजा सहस्कृतेन सहसा सहस्वता १
मन्युरिन्द्रो मन्युरेवास देवो मन्युर्होता वरुणो जातवेदाः ।
मन्युं विश ईळते मानुषीर्याः पाहि नो मन्यो तपसा सजोषाः २
अभीहि मन्यो तवसस्तवीयान् तपसा युजा वि जहि शत्रून् ।
अमित्रहा वृत्रहा दस्युहा च विश्वा वसून्या भरा त्वं नः ३
त्वं हि मन्यो अभिभूत्योजाः स्वयंभूर्भामो अभिमातिषाहः ।
विश्वचर्षणिः सहुरिः सहावा नस्मास्वोजः पृतनासु धेहि ४
अभागः सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः ।
तं त्वा मन्यो अक्रतुर्जिहीळा हं स्वा तनूर्बलदेयाय मेहि ५(५)१६१०
अयं ते अस्म्युप मेह्यर्वाङ् प्रतीचीनः सहुरे विश्वधायः ।
मन्यो वज्रिन्नभि मामा ववृत्स्व हनाव दस्यूँरुत बोध्यापेः ६

---

+ अथर्व. ४, १३, ६ । ॥ अथर्व. ४,३२,१—७ ।

अभि प्रेहि दक्षिणतो भवा मे ऽधा वृत्राणि जङ्घनाव भूरि।
जुहोमि ते धरुणं मध्वो अग्र—मुभा उपांशु प्रथमा पिबाव ७ १६१२

॥२॥ ( ऋ० १०।८४।१-७) जगती; १-३ त्रिष्टुप्।+

त्वया मन्यो सरथमारुजन्तो हर्षमाणासो धृषिता मरुत्वः।
तिग्मेषव आयुधा संशिशाना अभि प्र यन्तु नरो अग्निरूपाः १
अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि।
हत्वाय शत्रून् वि भजस्व वेद ओजो मिमानो वि मृधो नुदस्व २
सहस्व मन्यो अभिमातिमस्मे रुजन् मृणन् प्रमृणन् प्रेहि शत्रून्।
उग्रं ते पाजो नन्वा रुरुध्रे वशी वशं नयस एकज त्वम् ३(१०)
एको बहूनामसि मन्यवीळितो विशंविशं युधये सं शिशाधि।
अकृत्तरुक् त्वया युजा वयं द्युमन्तं घोषं विजयाय कृण्महे ४
विजेषकृदिन्द्र इवानवब्रवो३ ऽस्माकं मन्यो अधिपा भवेह।
प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आबभूथ ५
आभूत्या सहजा वज्र सायक सहो बिभर्ष्यभिभूत उत्तरम्।
क्रत्वा नो मन्यो सह मेद्येधि महाधनस्य पुरुहूत संसृजि ६
संसृष्टं धनमुभयं समाकृत—मस्मभ्यं दत्तां वरुणश्च मन्युः।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ७(१४)

॥ ३ ॥ [ १५-१७ ] ( वा० य० १८।४ )

मन्युश्च मे भामश्च मे यज्ञेन कल्पन्ताम् ४ १६२०

॥ ४ ॥ ( वा० य० १९।९ )

मन्युरसि मन्युं मयि धेहि ९

॥ ५ ॥ ( वा० य० ३०।१४ )

मन्यवेऽयस्तापम् १४

॥ ६ ॥ ( अथर्व० ६।४२।१-३ )
(१८-२०) भृग्वङ्गिराः ( परस्परं चित्तैकीकरणकामः ) अनुष्टुप्; १-२ भुरिक्।

अव ज्यामिव धन्वनो मन्युं तनोमि ते हृदः।
यथा संमनसौ भूत्वा सखायाविव सचावहै १

---

× अथर्व. ४,३१,१-७।

सखा॑याविव सचावहा अव॑ म॒न्युं त॑नोमि ते । अ॒धस्ते॒ अश्म॑नो म॒न्युमु॒पास्या॑मसि॒ यो गु॒रुः २
अ॒भि ति॑ष्ठामि ते म॒न्युं पार्ष्ण्या॒ प्रप॑देन च । यथा॑ऽव॒शो न वादि॑षो॒ मम॑ चि॒त्तमु॒पाय॑सि ३(१०)१६२५

# ३५ भाववृत्तम् ।

॥ १ ॥ ( ऋ० १०।१२९।१-७ )
( १-७ ) प्रजापतिः परमेष्ठी । त्रिष्टुप् ।

नास॑दासी॒न्नो सदा॑सीत् त॒दानीं॒ नासी॒द्रजो॒ नो व्यो॑मा प॒रो यत् ।
किमाव॑रीवः॒ कुह॒ कस्य॒ शर्म॒न्नम्भः॒ किमा॑सी॒द्गह॑नं ग॒भीर॑म् १
न मृ॒त्युरा॑सीद॒मृतं॒ न तर्हि॒ न रात्र्या॒ अह्न॑ आसीत् प्र॒के॒तः ।
आनी॑दवा॒तं स्व॒धया॒ तदेकं॒ तस्मा॑द्धा॒न्यन्न प॒रः किं च॒नास॑ २
तम॑ आसी॒त् तम॑सा गू॒ळ्हमग्रे॑ऽप्रके॒तं स॑लि॒लं सर्व॑मा इ॒दम् ।
तु॒च्छ्येना॒भ्वपि॑हितं॒ यदासी॒त् तप॑स॒स्तन्म॑हि॒नाजा॑य॒तैक॑म् ३
काम॒स्तदग्रे॒ सम॑वर्त॒ताधि॒ मन॑सो॒ रेतः॑ प्रथ॒मं यदासी॑त् ।
स॒तो बन्धु॒मस॑ति॒ निर॑विन्दन् हृ॒दि प्र॒तीष्या॑ क॒वयो॑ मनी॒षा ४
ति॒र॒श्चीनो॒ वित॑तो र॒श्मिरे॑षाम॒धः स्वि॑दा॒सी३दु॒परि॑ स्विदासी३त् ।
रे॒तो॒धा आ॑सन् म॒हिमान॑ आस॒न्त्स्व॒धा अ॒वस्ता॒त् प्रय॑तिः प॒रस्ता॒त् *५(५)१६३०
को अ॒द्धा वे॑द॒ क इ॒ह प्र वो॑च॒त् कुत॒ आजा॑ता॒ कुत॑ इ॒यं विसृ॑ष्टिः ।
अ॒र्वाग्देवा अ॒स्य वि॒सर्ज॑ने॒नाथा॒ को वे॑द॒ यत॑ आब॒भूव॑ ६
इ॒यं विसृ॑ष्टि॒र्यत॑ आब॒भूव॒ यदि॑ वा द॒धे यदि॑ वा॒ न ।
यो अ॒स्याध्य॑क्षः पर॒मे व्यो॑म॒न्त्सो अ॒ङ्ग वे॑द॒ यदि॑ वा॒ न वेद॑ ७

॥ २ ॥ ( ऋ० १०।१३०।१-७ )+
( ८-१४ ) यज्ञः प्राजापत्यः । त्रिष्टुप् । १ जगती ।

यो य॒ज्ञो वि॒श्वत॒स्तन्तु॑भिस्त॒त एक॑शतं देवक॒र्मेभि॒राय॑तः ।
इ॒मे व॑यन्ति पि॒तरो॒ य आ॑य॒युः प्र व॒याप॑ व॒येत्या॑सते त॒ते १
पुमाँ॑ एनं तनुत॒ उत् कृ॑णत्ति॒ पुमा॒न् वि त॑त्ने॒ अधि॒ नाके॑ अ॒स्मिन् ।
इ॒मे म॒यूखा॒ उप॑ सेदुरू॒ सदः॒ सामा॑नि चक्रु॒स्तस॑रा॒ण्योत॑वे २

* वा. य. ३३, ७४ । + ऋ. १०, १३०, १, ७ = अथर्व. १०, ७,४३ (उत्तरार्धः)-४४; वा. य. ३४।४९ ।

